मल्लिङ्गार्चनतत्परा हृदि सदा मामेव काश्यां मुदा
ध्यायन्तो मम नाम शङ्कर महादेवाखिलेश प्रभो ।
गौरीनाथ शिवेश्वरेति विमलं भक्त्या जपन्तः परं
सत्यं सत्यमपास्तभोगविषयाः शैवाग्रगण्याः शिवे ॥

॥ इति श्रीशिवरहस्ये सप्तमांशे काशीमहिमा-
ख्याने शिवगौरीसंवादो नाम
द्वितीयोऽध्यायः ॥



## ॥ तृतीयोऽध्यायः ॥

**पार्वत्युवाचः** -

देवोत्तमाखिलाराध्य विश्वेश शिव विश्वग ।
श्रुता पुण्यकथा रम्या त्वत्प्रसादान्मनोहर ॥ 1

त्वन्मुखाम्भोजविलसत्कथापुष्परसं पुनः ।
मच्चेतश्च[1]ञ्चरीकोऽयं पातुमिच्छति शङ्कर ॥ 2

महादेव कियत्काश्याः परिमाणं विशेषतः ।
किं वा तत्र महास्थानं किं वा तीर्थं महद्विभो ॥ 3

---

1 चञ्चरीक - **the large black bee.**

किं वा श्रेष्ठतमं लिङ्गं सर्ववेदान्तसंस्तुतम् ।
तत्सर्वं मे विशेषेण निरूपय कृपानिधे ॥

**श्रीशिव उवाच -**

सम्यक्पृष्टं वरारोहे साधु साधु वरानने ।
प्रश्नोऽयं तव कल्याणि कल्याणं तनुते मम ॥

यद्यत्पृष्टं त्वया देवि तत्तद्वेदान्तसम्मतम् ।
विचार्य तद्वदिष्येऽहं शृणु कर्णमनोरमम् ॥

पञ्चक्रोशात्मकं रम्यं काशीक्षेत्रमनुत्तमम् ।
तत्तु ज्योतिर्मयं लिङ्गं वेदवेद्यं पुरातनम् ॥

सहस्रकनकद्वारपरिवेष्टितमुन्नतम् ।
वज्रसङ्घट्टितश्रेष्ठसहस्रावरणान्वितम् ॥

अत्यूर्ध्वलोकगश्रेष्ठरत्नगोपुरराजितम् ।
नानाविधसुधासौधशृङ्गकान्तिविराजितम् ॥

तद्गोपुराग्रभागेषु विमलेषु कदाचन ।
न भाति भानुसञ्चारश्चञ्चलाक्षि वरानने ॥

तद्गोपुरेषु विमलाश्चन्द्रस्यापि न रश्मयः ।
नवग्रहगणस्यापि कान्तिरन्यस्य वा छविः ॥

प्रत्युप्तैतद्गोपुरस्य छविप्रतिहतप्रभाः ।
निष्प्रभा एव तिष्ठन्ति सर्वे सूर्यादयः शिवे ॥ 12

काशीगोपुरशृङ्गाणि रम्याण्यत्युन्नतानि च ॥
दृष्ट्वा सुमेरुरुच्चोऽपि लज्जितो भवति ध्रुवम् ॥ 13

अमूल्यानर्घरत्नौघरचितं शृङ्गमुन्नतम् ॥
सर्वान् लोकानतीत्यैव याति पश्य वरानने ॥ 14

एतत्पुरोवर्तिशृङ्गमूले भानुविधुग्रहाः ।
तिष्ठन्ति निष्प्रभा नित्यं शृङ्गप्रभहतप्रभाः ॥ 15

कथमुच्चतरो भाति पुण्यस्तम्भ इवामलः ।
ईदृशान्येव शृङ्गाणि सन्ति काश्यामनेकधा ॥ 16

काशीगोपुरशृङ्गाणामग्रभागदिदृक्षया ।
पुरा पूर्वं मया देवि कदाचिद्गतमादरात् ॥ 17

वृषेशप्रमुखाः सर्वे धी(ऽपी)श्वरप्रमथाधिपाः ।
ततः सर्वेऽनिवेद्यैव परावृत्ताः शुभानने ॥ 18

वृषेश्वराधिरूढेन मयैव गतमग्रतः ।
गमने कति वा मासा याताः सङ्ख्या न सा कृता ॥ 19

ततः परं वाममेकं शृङ्गाग्रं रत्नरञ्जितम् ।
गच्छदूर्ध्वं मया स्पृष्टं(दृष्टं) तत्करेण धृतं ततः ॥ 20

धृतमप्यतिवेगेन गतमूर्ध्वं तदन्तिके ।
ममाश्चर्यमभूच्छीघ्रं गमनं तस्य पश्यतः ॥ 21

वायोरपि तथावेगो न दृष्टोऽपि कदाचन ।
तच्छृङ्गाग्रं दृश्यमानमदृश्यमभवत्क्षणात् ॥ 22

तदानीमेव तद्दृष्ट्वा वृषेशो विस्मयं गतः ।
महदाश्चर्यसम्पन्नः ततः परमहं शुभे ॥ 23

समागतोऽस्मि कैलासमारुह्य वृषभाधिपम् ।
हर्म्यगोपुरशृङ्गाणि परस्परजिगीषया ॥ 24

गच्छन्त्यत्यन्तवेगेन सदा रत्नमयानि हि ।
अष्टदिक्षु गणाधीशाः शूलमुद्गरपाणयः ॥ 25

असङ्ख्याताः सदा देवि वसन्त्यमितविक्रमाः ।
सहस्रार्बुदभूतेशाः शितशूलकराः सदा ॥ 26

निवसन्ति प्रतिद्वारि तीक्ष्णाक्षा विवृताननाः ।
शक्तिसङ्घाश्च बहवः प्रतिद्वारि वरानने ॥ 27

ज्वलद्वह्निनिभाः सन्ति भैरवाः स्वबलोन्नताः ।
रविरक्ताक्षगन्धर्वः कश्चिदद्भुतविक्रमः ॥ 28

काशीदक्षिणदिग्भागे दुर्धर्षस्तिष्ठति प्रिये ।
धतोर्ध्वमुष्टिरुन्मत्तः शूलदन्तकरायुधः ॥ 29

प्रज्वलद्वह्निसङ्काशः सूर्यमण्डलसन्निभः ।
तद्भृत्यास्तादृशा वीरा बलमानविजृम्भिताः ॥ 30

रक्तवस्त्रा रक्तकायाः शत्रुरक्तैकजीवनाः ।
उन्मत्तभैरवो नाम कश्चिदस्ति महाबलः ॥ 31

तस्यामेव दिशि श्रेष्ठः कोटियोजनमुन्नतः ।
मन्दराचलसङ्काशो महाकायो भयानकः ॥ 32

कोटिकोटिगणाधीशसङ्काशाङ्गुलिविक्रमः ।
श्वेतोर्ध्वदीर्घरदनः पिङ्गलाक्षिशिरोरुहः ॥ 33

सित (शित) वज्रनिभानन्तकररोमा मदोद्धतः ।
क्रूराक्षिपातमात्रेण निहत्यारिकुलान् बहून् 34

पाताले भुवि नाके वा तत्तुल्यो नैव दृश्यते ।
तत्क्रूरदृष्टिपातेन भस्म सञ्जायते गिरिः ॥ 35

तत्क्रूरदृष्ट्या पृथिवी कम्पमानेव तिष्ठति ।
क्षीराब्धिरेकदा पूर्वं पीतस्तेन ततः परम् ॥ 36

महाभुजो महाकायी (यः) क्रूरदृष्टिरलोलुपः ।
सर्वे समुद्राः सरितः पीतास्तेनैव लीलया ॥ 37

शैलेन्द्राः पूर्वमेतेन भक्षिता बहवो मुदा ।
कदाचिदूर्ध्वं पृथिवी नीयते पृथुबाहुना ॥ 38

छत्रीकृता तदा सैव तेन शैलवनान्विता ।
बहुकालं प्रयत्नेन सुरगन्धर्ववीक्षितः ।। 39

चक्रवद्भ्रामयामास नखाग्रे सन्निवेश्य च ।
अनेनैवातिमत्तेन लोका व्यत्यासिताः पुरा ।। 40

ततः स कृपया लोकान् यथापूर्वं चकार च ।
इन्द्रादिलोकपालाश्च कृताञ्जलिपुटास्सदा ।। 41

संसेवन्ते भयग्रस्ताः कम्पमानास्तमादरात् ।
तपसा सम्यगाराध्य तमेव तदनुग्रहात् ।। 42

काशीप्रवेशमिच्छन्ति स्वर्गलोकनिवासिनः ।
अनिवेद्य गतःपूर्वं तमेव चतुराननः ।। 43

काश्यां ततः क्रूरदृष्टिर्लीलया चतुराननम् ।
शीघ्रं निष्क्रामयामास प्रलयान्तं स भैरवः ।। 44

काशीप्रवेशो नैवास्य तदाप्रभृति सर्वथा ।
दुःखितः स विधिस्तेन विकृतो वनमाययौ ।। 45

प्रलपन् वनमाश्रित्य सरस्वत्या स तिष्ठति ।
इदानीं विधिरत्यन्तं काशीदर्शनलालसः ।। 46

तमेव तपसा सम्यगाराधयति सादरम् ।
तस्य काशीप्रवेशार्थमाज्ञां दास्यत्यसंशयम् ।। 47

अयमेतादृशो देवि काशीपालनतत्परः ।
इतोऽपि प्रबलाःसन्ति काशीसंरक्षणक्षमाः ॥ 48

तेषां तेजो बलं वीर्यं शौर्यमौदार्यमुत्कटम् ।
वक्तुं न शक्यते देवि सहस्रवदनैरपि ॥ 49

काशीसंरक्षका वीराः यावन्तः सन्ति तावताम् ।
प्रसादेन विना काशी प्रवेष्टुं नैव शक्यते ॥ 50

भिन्नप्रकृतिगाः क्रूराः काशीसंरक्षकाः सदा ।
अनन्ता दुर्मदाःसर्वे परस्परजिगींषवः ॥ 51

अनल्पाराधनप्रीता बहुसेवाभिलाषिणः ॥
छिद्रान्वेषणलोलाक्षाः पक्षपातविवर्जिताः ॥ 52

तत्प्रसादाय यत्नोऽपि कर्तुं नैव हि शक्यते ।
तत्प्रसादस्वरूपं तु फलं केनोपलक्ष्यते ॥ 53

अनन्तजन्मभिः क्लेशाः केन कार्याः प्रयत्नतः ।
केन वा तत्प्रसादोऽपि प्राप्तव्यः क्लेशसाधितः ॥ 54

केन सूच्यग्रमारुह्य तपः कर्तव्यमादरात् ।
केनोपवासाः कर्तव्याः काशीप्राप्त्यै निरन्तरम् ॥ 55

केन सन्दीप्य पञ्चाग्निज्वाला सह्यातिदुस्सहा ।
केन पर्णाशिनं कार्यं काशीप्राप्त्यै निरन्तरम् ॥ 56

केन मृष्टान्नपानादि त्यक्त्वा निःस्पृहमादरात् ।
स्वल्पं वाताशनं कार्यं काशीप्राप्त्यै निरन्तरम् ॥ 57

केनाऽऽगलं जले स्थित्वा हिमकाले दुरासदे ।
पञ्चाक्षरजपः कार्यः काशीप्राप्त्यै निरन्तरम् ॥ 58

केनाधोमुखमासाद्य धूमः पेयोऽतिदुःसहः ।
केनेन्द्रियजयः कार्यः काशीप्राप्त्यै निरन्तरम् ॥ 59

केन स्रक्चन्दनश्रेष्ठवनिताकनकादयः ।
अविषादं कथं त्याज्याः काशीप्राप्त्यै निरन्तरम् ॥ 60

केन मुक्तावली त्याज्या नानारत्नविराजिता ।
रुद्राक्षधारणं कार्यं काशीप्राप्त्यै निरन्तरम् ॥ 61

केन नानाविधाः सौधास्त्याज्याः शृङ्गविराजिताः ।
अरण्ये वसतिः कार्या काशीप्राप्त्यै निरन्तरम् ॥ 62

केन त्यक्त्वा पट्टुस्पष्टदृढनारीकुचासनम् ।
कुशासनं परिग्राह्यं काशीप्राप्त्यै निरन्तरम् ॥ 63

केन कान्तासमाक्रान्तां शय्यां त्यक्त्वा मनोरमाम् ।
भस्मशय्या परिग्राह्या काशीप्राप्त्यै निरन्तरम् ॥ 64

कस्यचिद्भूरिपुण्येन बहुजन्मार्जितेन हि ।
महेशानुग्रहे जाते काशीप्राप्तिर्भविष्यति ॥ 65

निरन्तरं कृता भक्तिः येन मय्यनपायिनी ।
तेन काशीपुरं प्राप्यं नान्येन शुभदर्शने ॥ 66

यस्य भक्तिर्दृढा नित्यं मय्येवाव्यभिचारिणी ।
तस्यैव काशी सुलभा नान्यस्य वरवर्णिनि ॥ 67

यस्य लिङ्गार्चने प्रीतिर्यस्य रुद्रजपे मतिः ।
तस्यैव काशी सुलभा स एव मम सम्मतः ॥ 68

शिवक्षेत्राटनं येन बहुधा कृतमादरात् ।
तेनैव काशी संप्राप्या नान्येन कमलानने ॥ 69

शिवपूजैव सततं कृता येन भविष्यति ।
तेनैव काशी संप्राप्या नान्येन कमलानने ॥ 70

त्रिपुण्ड्रधारणं येन कृतं स्याद्विधिपूर्वकम्
तेनैवकाशी संप्राप्या नान्येन कमलानने ॥ 71

कृतं येन सदा भक्त्या शिवक्षेत्रस्य मार्जनम् ।
तेनैव काशी संप्राप्या नान्येन कमलानने ॥ 72

शिवपूजार्थमनिशं येन बिल्वार्जनं कृतम् ।
तेनैव कशी .... .... .... .... ॥ 73

शिवस्थानानि येनैव कारितानि कृतानि च ।
तेनैव काशी .... .... .... .... ॥ 74

शिवभक्तैः सदा प्रीतिः कृता येन भविष्यति ।
नैव काशी .... .... .... .... ॥ 75

येन बिल्ववनं रम्यं सम्यक्कृतमनामयम् ।
तेनैव काशी सं.... .... .... ॥ 76

येन मूर्ध्नि गले कर्णे रुद्राक्षाः सततं धृताः ।
तेनैव काशी .... .... .... .... ॥ 77

रुद्राभिषेक-पानीयं येन पीतं सदा मुदा ।
तेनैव काशी .... .... .... .... ॥ 78

येन साङ्गं लिङ्गदानं कृतं स्याद्भक्तिपूर्वकम्
तेनैव काशी .... .... .... .... ॥ 79

येन शैवाः शिवप्रीत्यै भोजिताः साधुसाधनैः ।
तेनैव काशी .... .... .... ॥ 80

येन पार्थिवलिङ्गानि पूजितान्यनिशं मुदा ।
तेनैव काशी .... .... .... .... ॥ 81

शैलाश्चूर्णयितुं शक्या मन्दरप्रमुखा दृढाः ।
कदाचित्केनचित्सम्यक्काशी प्राप्तुं न शक्यते ॥ 82

सद्यःशोषयितुं शक्याः निःशेषमतिवेलगाः ।
कदाचित्केनचित्सम्यक्काशी प्राप्तुं न शक्यते ॥ 83

क्षीराब्धिप्रमुखादीनां पारं कर्तुं हि शक्यते ।
कदाचित्केनचित्सम्यक्काशी प्राप्तुं न शक्यते ॥ 84

व्यत्यासः सर्वलोकानां शक्यते कर्तुमेकदा ।
कदाचित्केनचित्सम्यक्काशी प्राप्तुं न शक्यते ॥ 85

इन्दुः कन्दुकवत्कर्तुं शक्यते भानुमानपि ।
कदाचित्केनचि .... .... .... ॥ 86

प्रज्वलद्वह्निमध्ये तु शक्यते स्थातुमन्वहम् ।
कदाचित्केनचित् ... .... .... ॥ 87

बहुधा विविधं द्रव्यं बहु दातुं च शक्यते ।
कदाचित्केनचित् .... .... .... ॥ 88

पुरा कश्चिद्द्विजाधीशः शिवमूर्तिरिति श्रुतः ।
सर्ववेदार्थतत्वज्ञः सर्वशास्त्रविशारदः ॥ 89

नीतिमान् निपुणो मन्त्री सर्वदा शिवपूजकः ।
असङ्ख्यातधनाध्यक्षस्तुरङ्गगजपालकः ॥ 90

पुराणश्रवणासक्तः काशीमाहात्म्यमुत्तमम् ।
श्रोत्रानन्दकरं रम्यं शुश्रावाघौघनाशनम् ॥ 91

ततः स मन्मथाकारो नवमन्मथकनिन्दकः ।
उपार्जितगजाश्वादिधनधान्यादिकं स्वकम् ॥ 92

रूपलावण्यसौन्दर्यनवयौवनदर्पिताम् ।
स्वभार्यां च विलोक्याथ बभाषे वचनं मुदा ॥ 93

**श्रीशिवमूर्तिरुवाच -**

अपि(यि)भार्ये वचो युक्तं श्रृणु कर्णैकभूषणम् । 94

काशीक्षेत्रस्य माहात्म्यं श्रुतमद्य मयाधुना ।
दिवि वाऽन्यत्र वा लेके काशीस्थलसमं स्थलम् ॥ 95

न दृष्टं न श्रुतं क्वापि नास्ति चेति कथा श्रुता ।
बहुजन्मतपःसाध्या काशीप्राप्तिः किलामला ॥ 96

अलभ्या किल सा काशी विरिञ्चिप्रमुखैरपि ।
दुर्धर्षाः प्रबला वीरा नानाशस्त्रास्त्रपारगाः ॥ 97

विवृत्तास्या मदोन्मत्ताः श्रीकाशीपालकाः किल ।
तादृशानां प्रसादेन विना काशी शिवात्मिका ॥ 98

न दृश्यते किलामर्त्यैर्मनुजैर्दृश्यते कथम् ।
विश्वेश्वरादिभिः(भिधं)लिङ्गं ज्योतीरूपं सनातनम् ॥

वेदवेदान्तसंवेद्यमेकमस्तीति संश्रुतम् ।
तल्लिङ्गदर्शनात्सद्यो मुच्यते किल पातकैः ॥ 100

तदेवाराध्यममलं मर्त्यैर्देवासुरैरपि ।
तद्वैश्वेश्वरमुत्कृष्टमनाद्यन्तमनामयम् ॥ 101

लिङ्गं द्रष्टव्यमनघं यत्नैर्नानाविधैरपि ।
विना तद्दर्शनं लोके मुक्तिरत्यन्तदुर्लभा ॥ 102

लिङ्गमूर्तिर्महादेवस्तदाकारेण तिष्ठति ।
ब्रह्मणापि न सा काशी लभ्यते किल सर्वथा ॥ 103

किमन्यैर्मादृशैर्मर्त्यैः किङ्कर्तव्यमतः परम् ।
तपोभिर्विविधैर्दानैर्यथाविधि कृतैरपि ॥ 104

काशी न लभ्यते नूनं किङ्कर्तव्यमतःपरम् ।
नानाविधशिवक्षेत्रभ्रमणेनापि सर्वथा ॥ 105

न लभ्या किल सा काशीं किङ्कर्तव्यमतःपरम् ।
काशीप्राप्त्यर्थमुद्युक्तं पुमांसं विघ्नराशयः ॥ 106

तिष्ठन्ति किल संश्रित्य किङ्कर्तव्यमतः परम् ।
कश्चित्कालाग्निप्राकारः काश्यामंते (मास्ते) सुदुःसहः ॥

तत्तापतप्ता निकटे न यान्ति किल देवताः ।
धिग्जन्म मम धिक् भाग्यं धिक्कृतं मम यौवनम् ॥ 108

सा काशी न मया प्राप्ता या मुक्तिफलदायिनी ।
धिगैश्वर्यं धिगौदार्यं धिङ्ममैतद्वपुर्नवम् ॥ 109

सा काशी न मया प्राप्ता या मुक्तिफलदायिनी ।
धिगेतच्चरणद्वन्द्वं कोमलं कमलामलम् ।।

सा काशी .... .... .... .... ।
धिङ्नेत्रयुगलं धिक् धिक् ममैतत्करपल्लवम् ।।

सा काशी न मया प्राप्ता या मुक्तिफलदायिनी ।
धिङ्नानाविधरत्नाढ्यकोशागारं मनोरमम् ।
सा काशी न मया .... .... .... ।।

धिक्चातुर्यं जनस्तव्यं धिङ्ममैतत्कुलं बलम् ।
स्वोदरं सारमेयोऽपि संपूरयति सर्वदा ।।

तच्छरीरान्मच्छरीरं न वरं नारमीदृशम् ।।

दुर्लभं मानुषं ब्राह्मं जन्म प्राप्यातिशर्मदम् ।
हा हा हा हा मया काशी न लब्धा किं करोम्यहम् ।।

किं दुष्कृतं मया पूर्वं कृतं बहुविधं मुदा ।
हा हा हा हा मया काशी न लब्धा किं करोम्यहम् ।।

किं भस्मधारणं सम्यङ् न पुरा कृतमादरात् ।
हाहाहाहा मया काशी न लब्धा किं करोम्यहम् ।।

किं पूर्वजन्मन्यनिशं रुद्राक्षा न धृताः शुभाः ।
हा हा हा हा मया .... .... .... ।।

किं लिङ्गस्फोटनं पूर्वं कृतं दुःखैकसाधनम् ।
हा हा हा हा मया काशी .... .... .... .... ॥ 119

किं वा शिवाचाररताः शैवा नाराधिताः पुरा ।
हा हा हा हा मया काशी .... .... .... .... ॥ 120

किं वा शिवक्षेत्रमध्ये पुरीषादि कृतं मया ।
हा हा हा हा मया काशी .... .... .... .... ॥ 121

किं वा रुद्रजपेनेशो नाराधि गिरिजापतिः ।
हा हा हा हा मया काशी .... .... .... .... ॥ 122

किं वा बिल्वदलैरीशो नाराधि बहुधा शिवः ।
हा हा हा हा मया काशी .... .... .... .... ॥ 123

किं वा शिवालयं भग्नं शिवप्रीतिकरं मुदा ।
हा हा हा हा मया काशी .... .... .... .... ॥ 124

किं गोपुरसहस्राणि संहृतानि पुरा मया ।
हा हा हा हा मया काशी .... .... .... .... ॥ 125

किं वा शैवः पुरा विप्रः शिवलिङ्गतनुर्हतः ।
हा हा हा हा मया काशी .... .... .... .... ॥ 126

किं वा बिल्ववनं रम्यं पुरा छिन्नं शिवप्रियम् ।
हा हा हा हा मया काशी .... .... .... .... ॥ 127

किं वा बिल्वदलैरीशमनभ्यर्च्याशितं पुरा ।
हा हा हा हा मया काशी .... .... .... .... ॥ 128

एवं विलप्य बहुधा स विप्रो गिरिजे ततः ।
स्वसञ्चितं धनं सर्वं शैवेभ्यः प्रददौ मुदा ॥ 129

ततः सर्वं परित्यज्य सभार्यः स्वार्जितं धनम् ।
जगाम गहनं रम्यं स बिल्वतरुसंवृतम् ॥ 130

तस्मिन् वने जिताहारः सभार्योऽपि जितेन्द्रियः ।
तपस्तेपे महद्घोरं सर्वभूतभयावहम् ॥ 131

तेनैव कम्पिता देवाः सर्वे ब्रह्मादयः सदा ।
चेलुश्च गिरयः सर्वे तरवश्चापि कम्पिताः ॥ 132

क्षीराब्धिप्रमुखाश्चापि समुद्राः कम्पितास्तदा ।
वसुधापि चचालेयं सरित्काननसंवृता ॥ 133

एवं घोरतरं विप्रस्तपः कर्तुं समारभे (प्रचक्रमे) ।
पूर्वं पूर्वभवेष्वेवं तपस्तप्तमनेन हि ॥ 134

कोटिजन्मावधि प्रीत्या काशीसंप्राप्तये मुदा ।
तपो घोरतरं तीव्रमयं कृत्वैव तिष्ठति ॥ 135

ईदृशा बहवो देवि काशीप्राप्त्यर्थमेव हि ।
तपो घोरतरं कृत्वा तिष्ठन्ति नियतेन्द्रियाः ॥ 136

ये काशीवाससिध्यै दृढतरनियमासक्तचित्ता विविक्तं
देशं संश्रित्य रम्यं शिवजनसहितं बिल्ववृक्षौघवीतम् ।
तिष्ठन्त्यत्यन्तहृष्टा धृतभसितकणाविष्टदेहा मनोज्ञा-
स्ते धन्याःसत्यमेतद्गिरिवरतनये सर्वथा सत्यमेव ।।

।। इति श्रीशिवरहस्ये सप्तमांशे शिवगौरी-
संवादे काशीमाहात्म्ये
तृतीयोऽध्यायः ।।



## ।। चतुर्थोऽध्यायः ।।

**श्रीशिव उवाच -**

कथामन्यां प्रवक्ष्येऽहं शृणु सादरमम्बिके ।
यत्कथाश्रवणादेव सद्यो मुच्येत पातकैः ।। 1

शिवस्थानान्यनेकानि सन्ति काश्यां वरानने ।
तेषां सङ्ख्या मया सम्यक् कर्तुमेव न शक्यते ।। 2

कदाचिच्छक्यते कर्तुं भूपांसुगणना भुवि ।
काशीशिवस्थानसङ्ख्या केन कार्या विशेषतः ।। 3

लिङ्गोपर्यपि लिङ्गानि सन्ति काश्यामनेकधा ।
तानि रम्याणि लिङ्गानि विचित्रफलदानि च ॥

स्थूलस्यापि च सूक्ष्मस्य सावकाशतया स्थितिः ।
न दृश्यते मया काश्यां लिङ्गसम्मर्दतः शुभे ॥

मम दिव्या तनुः काशी सर्वा यद्यपि सर्वथा ।
तथाप्यन्तर्गृहाकारा ममान्तस्तनुरुत्तमा ॥

अन्तर्गृहस्य प्राकारं काश्मीरमणिरञ्जितम् ।
स(?)चेदानीमपि स्पृष्टं जवेनोर्ध्वं प्रयाति हि ॥

तन्मूलमन्तर्भागो वा न केनापि च दृश्यते ।
तत्प्रकारप्रभापूरैर्दिशः सर्वा विभूषिताः ॥

नानाविधानेकदिव्यरत्नराजिविराजितम् ।
तदेवान्तर्गृहं रम्यं मम प्रियतरं वरम् ॥

तस्मिन्नन्तर्गृहे रम्ये निवसाम्यनिशं शिवे ।
न तत्र वसतिर्नित्यं ब्रह्मादीनामपि स्फुटम् ॥

गन्धर्वाणां मनुष्याणां मुनीनामपि किं पुनः ।
रागद्वेषादिविलया यतस्ते दुष्टविग्रहाः ॥

सर्वथान्तर्गृहे वासो न कर्तव्यः शरीरिभिः ।
यतो मूत्रपुरीषादि निरोद्धुं तैर्न शक्यते ॥

प्रमादाद्यदि वा मोहान्मूत्रोत्सर्गं करोति यः ।
अन्तर्गृहे स पापिष्ठो घोरां प्राप्नोति यातनाम् ।। 13

किञ्च तत्कुलजाः स्वस्वधर्मेणोत्तमलोकगाः ।
नीयन्ते नरकं घोरं सर्वेऽपि यमकिङ्करैः ।। 14

नरकेष्वतिघोरेषु पच्यमाना दिवानिशम् ।
तिष्ठन्ति पुनरावृत्तिदुर्लभे नरकालये ।। 15

दुःसहं कैश्चिदनिशं तस्यां ते कैश्चिदुद्भटैः ।
खाद्यन्ते तप्तशूलाग्रे निपात्यन्ते मुहुर्मुहुः ।। 16

सन्तप्तवालुकामध्ये भर्जन्ते(र्ज्यं)निर्भयं भटैः ।
ततस्तप्तायसैः पिण्डैर्निपीड्यन्ते दुरासदैः ।। 17

ततस्तप्तशिलाग्रेषु निपीड्यन्ते भटैर्मुदा ।
सन्तप्ततैलमध्येऽपि निक्षिप्यन्ते पुनः पुनः ।। 18

पुनः सन्तप्तरुधिरं पाययन्त्यतिसाहसाः ।
तप्तमूत्रं पाययन्ति बहुधा तीव्रमुद्धताः ।। 19

तप्तशूले प्रोथयित्वा भ्रामयन्ति पुनः पुनः ।
ईदृशान्यतिघोराणि भुञ्जते(भुज्यन्ते) नरकाणि तैः ।।

पुरा कश्चिद् द्विजवरो वेदवेदाङ्गपारगः ।
पूर्वार्जितैर्भूरिपुण्यैः काशीं संप्राप्य संस्थितः ।। 21

अन्तर्गृहाद्बहिर्देशे स्थित्वा नियममास्थितः ।
कृत्वा दानान्यनेकानि तपः कृत्वातिदुःसहम् ।। 22

जलमात्राशनो नित्यं नियतो नियतेन्द्रियः ।
प्रदक्षिणत्रयं कृत्वा नित्यमन्तर्गृहस्य सः ।। 23

प्रत्यहं बिल्वपत्रैर्मां लिङ्गरूपिणमर्चयन् ।
वर्षाणामयुतं तस्थौ ज्वलद्वह्निरिवानिशम् ।। 24

ततः कदाचिन्मोहेन नियतोऽपि द्विजोत्तमः ।
चकारान्तर्गृहे शैवे मूत्रोत्सर्गं शुभावहे ।। 25

ततः स निलयं प्राप्य स्वकीयं द्विजपुङ्गवः ।
अन्तर्गृहे कृतं स्वेन मूत्रोत्सर्गं स्मरन्मुहुः ।। 26

रुरोदोच्चैः स्वकं देहं स्वयमेव हि ताडयन् ।
भूमौ पतित्वा विलुठन् शिरः सन्ताडयन्मुहुः ।। 27

तत्पर्णशालानिकटवासिनोऽन्ये मुनीश्वराः ।
श्रुत्वा तद्रोदनं सर्वे किमासीदिति चोचिरे ।। 28

पृष्टस्तैस्स रुदन्नुच्चैर्नरकावाससाधनम् ।
स्वकृतं पापजं कर्म तेभ्यःसम्यङ्न्यवेदयत् ।। 29

ततस्ते श्रुतितत्वज्ञाः श्रुत्वा वाचमरुन्तुदाम् ।
हा हा हा हेति रुरुर्दुनिभृतं ताडिता इव ।। 30

ततः स विनयान्नत्वा तानेव ऋषिसत्तमान् ।
प्रायश्चित्तं ययाचे ह स्वकृताघौघनाशकम् ॥ 31

ते वेदानखिलान् सम्यक् (गा) अलोड्यापि पुनः पुनः ।
तत्पापनाशकं सम्यक् प्रायश्चित्तं न सञ्जगुः ॥ 32

रे विप्र दुर्मते दुष्ट महत्पापं त्वया कृतम् ।
न चास्य निष्कृतिर्दृष्टा सर्ववेदेषु सर्वथा ॥ 33

बहुकालं तपःकृत्वा धर्मो यः साधितस्त्वया ।
सोऽपि नष्टः क्षणेनैव तत्पापेन (पापस्य) बलेन हि ॥ 34

ये ये धर्मास्त्वया सम्यक् साधिताः सम्य (श्रद्धया)गादरात् ।
तेऽपि दुःखार्जिता धर्मा नष्टा एव न संशयः ॥ 35

नास्त्येव शरणं विप्र तवेदृक्पापकारिणः ।
यामीयाः किङ्कराः सर्वे नृत्यं कुर्वन्ति साहसाः ॥ 36

पुरा ये तर्जिताः सम्यक् त्वया ते यमकिङ्कराः ।
नृत्यन्त्यतीव सन्तुष्टाः शूलमुद्गरपाणयः ॥ 37

बहुक्लेशार्जिता धर्माः क्षणेनेव कथं (क्षयं) गताः ।
दुरदृष्टस्य माहात्म्यमिदमेव हि दृश्यते ॥ 38

अत्यन्तदुर्लभो विप्र काशीवासो न संशयः ।
मनुष्यदेहमासाद्य काश्यां स्थातुं न शक्यते ॥ 39

अतिधर्मेण वै नित्यं काशीवासो भविष्यति ।
ततः कदाचिन्निःश्रेयो भवत्येव मुदावहः ।। 40

कथं शिवं प्रयास्यामो निर्विघ्नेनाक्षरं परम् ।
शान्तं प्रसन्नमनघं कदा वाऽक्षयधर्मतः ।। 41

कथमस्माभिरप्यत्र काश्यां स्थातुं हि शक्यते ।
पातकानि बहून्येव सम्भविष्यन्ति सर्वथा ।। 42

बहुपुण्यार्जिता काशी कथं त्याज्या मनीषिभिः ।
काशीप्राप्त्यर्थमेवाद्ध तपः कृतमनेकधा ।। 43

देहपातः कदा वात्र भविष्यति तपोबलात् ।
शिवमेव प्रयास्यामः काशीवासजधर्मतः ।। 44

पुनरावृत्तिरहितं दुःखमात्रविवर्जितम् ।
साम्बरूपं कदा काशीमरणात्प्राप्यमीदृशैः ।। 45

बहुपुण्यैरियं काशी लब्धा तीव्रमिदं वपुः ।
न गृह्णाति कथं प्रीत्या मुक्तिदा भक्तवत्सला ।। 46

इति तद्वचनं श्रुत्वा बभाषे तानथ द्विजः ।
पापं तु यत्कृतं दुष्टमस्य नास्त्येव निष्कृतिः ।। 47

इतः परं मया कार्यं पापशान्तिकरं न हि ।
पापिष्ठेन कृतं कर्म फलदं च भविष्यति ।। 48

अनेनैव हि पापेन तत्तन्कर्मसमुद्भवम् ।
विनश्यति फलं नूनं पुण्यवृद्धिर्न सर्वथा ॥ 49

किञ्चास्मत्कुलजाः केचिदूर्ध्वलोकगताः पुरा ।
मत्पापेनैव ते सर्वे यास्यन्ति नरकं ध्रुवम् ॥ 50

अहमेव न नष्टोऽस्मि तेऽपि सर्वे विनाशिताः ।
क्व गन्तव्यं क्व मर्तव्यं किङ्कर्तव्यमतः परम् ॥ 51

नरकाण्यतिघोराणि भोक्तव्यानि कथं मया ।
पितृभिश्चापि भोज्यानि द्रष्टव्यानि कथं मया ॥ 52

एवं विलप्य बहुधा कालेन स मृतो द्विजः ।
काश्यामेव महादेवि दुःखितो व्याधिपीडितः ॥ 53

ततो यमभटाः सर्वे प्रणम्य यममुद्धतम् ।
कृताञ्जलिपुटा भूत्वा यमं प्रोचुर्मदोद्धताः ॥ 54

**यमदूता ऊचुः -**

तेनैवान्तर्गृहे पूर्वं मूत्रोत्सर्गः कृतोऽस्ति हि ।
यम कश्चिद् द्विजः काश्यां मृतः पापात्मनां वरः ॥ 55

तद्वंशजाः पूर्वमेव स्वर्गलोकनिवासिनः ।
अतीता नरके घोरे पातितास्तव शासनात् ॥ 56

पच्यन्ते ते सदा घोरे नरके यम किङ्करैः ।
स किमस्माभिरानेयो न वशः स्यात्स शासक ॥ 57

**यम उवाचः -**

रे रे काश्यां मृतो जन्तुः बहुपापाश्रयोऽपि सन् ।
न यामं लोकमाप्नोति सत्यमेव मयोच्यते ॥ 58

श्रीकालभैरवः काश्यां मृतान्पापरतान् जनान् ।
अघोरयातनाप्राप्त्यै स्वभटेभ्यः प्रयच्छति ॥ 59

भवतां गमनं काश्यां व्यर्थमेव भविष्यति ।
दुर्धर्षाः प्रबला वीराः कालभैरवकिङ्कराः ॥ 60

नानाविधानेकरूपा यातनाकारिणः सदा ।
त एव दुर्मदाः सम्यक् ताडयिष्यन्ति तं द्विजम् ॥ 61

सोढुं न शक्यते लोके कालभैरवयातना ।
तद्यातनावीक्षणं च दुःखदं दुःखदायकम् ॥ 62

क्षणेन जायते यत्र यातना यादृशी भटाः ।
तादृशी भूयसाप्यत्र कालेन न भविष्यति ॥ 63

एकैको यः कशाघात. स सोढुं केन शक्यते ।
तादृशो हि कशाघातः केन कर्तुं च शक्यते ॥ 64

विविधा यातना काश्यां दुःसह्या जायते सदा ।
सर्वथा नैव गन्तव्यं भवद्भिर्भयविह्वलैः ॥ 65

क्व भवन्तः क्व वा काशी क्व वा काश्यां मृतो जनः ।
स मार्गः सर्वथा त्याज्यो भवद्भिर्दुबलैर्भटाः ॥ 66

काशीभिन्नप्रदेशेषु ये मृताःपापिनो जनाः ।
भवद्भिस्ते समानेयास्ताडनीयाः प्रयत्नतः ॥ 67

इत्थं यमवचःश्रुत्वा ते सर्वे यमकिङ्कराः ।
तद्वंशजान् नाशयन्तो नरकेषु सदा स्थितान् ॥ 68

सोऽपि द्विजः सदा काश्यां कालभैरवकिङ्करैः ।
ताड्यामानः स्वकं पापं भुक्त्वा तिष्ठत्यहर्निशम् ॥ 69

पापं कृत्वा मृतो यस्तु काश्यां जन्तुर्भविष्यति ।
स कालभैरवेणैव शिक्षितो भवति ध्रुवम् ॥ 70

अल्पं चापि कृतं काश्यां पातकं बहु जायते ।
पुण्यमप्येवमेवात्र जायते वरवर्णिनि ॥ 71

काश्यां कृतानि पापानि न नश्यन्ति कदाचन ।
अणुमात्रं च तत्पापं मेरुतुल्यं भविष्यति ॥ 72

पुण्यं पुराकृतं काश्यां पापेनैकेन नश्यति ।
न चेत्पापं तदा पुण्यं वर्धते बहुधा शुभे ॥ 73

दुर्लभा सर्वथा काशी काशीवासोऽपि दुर्लभः ।
दुर्लभं मरणं काश्यां काश्यां धर्मोऽतिदुर्लभः ॥ 74

काश्यां धर्मार्थमुद्युक्तं पुरुषं विघ्नराशयः ।
समाश्रित्याखिलं धर्मं नाशयन्ति मुहुर्मुहुः ॥ 75

प्रतिक्षणं प्रतिपदं विघ्नसङ्घा दुरासदाः ।
धर्मोद्योगमतिं मर्त्यं नाशयन्त्येव सर्वथा ॥ 76

श्रीपार्वत्युवाच -

महादेवैवमनिशं विघ्नोपद्रुतमादरात् ।
कथं काशीनिवासार्थमुद्योगंकर्तुमिच्छति ॥ 77

एवमुक्तप्रकारेण भुवि कस्यापि सर्वथा ।
न भविष्यति विश्वेश काशीवासोऽतिदुर्लभः ॥ 78

कीदृशः पुरुषो योग्यः काश्यां स्थातुं पुरान्तक ।
कथं स्थातव्यमनिशं वद सर्वं विशेषतः (अशेषतः) ॥

श्रीशिव उवाच -

शृणु गौरि वरारोहे यथाशास्त्रं वदाम्यहम् ।
काशीवासाय योग्यो हि पुरुषो विजितेन्द्रियः ॥ 80

निष्कल्मषो नीतियुक्तो निरीहो निर्गतस्पृहः ।
जीर्णवल्कलवीताङ्गः पाण्डुपर्णाशनप्रियः ॥ 81

दयायुक्तः शान्तियुक्तो निरीहो निर्गतस्पृहः ।
अष्टाङ्गयोगनिरतो मौनव्रतपरायणः ॥ 82

विभूतिभूषणो नित्यं त्रिपुण्ड्राङ्कितमस्तकः ।
रुद्राक्षमालावीताङ्गो लिङ्गपूजापरायणः ॥ 83

तुल्यनिन्दास्तुतिर्धीरस्तुल्यो मानापमानयोः ।
रागद्वेषादिरहितो विरक्तो विगतस्पृहः ॥ 8

पञ्चाग्निसेवानिरतो नित्यं यात्रारतोऽनिशम् ।
नित्यान्तर्गृहयात्रायां नियतो दृढविग्रहः ॥ 85

पञ्चाक्षरजपासक्तः पक्षे पक्षे यथाविधि ।
पञ्चक्रोशस्य यात्रायां नियतः सत्यमानसः ॥ 86

सत्यव्रतः सत्यपरो नित्यं मत्पूजने रतः ।
मद्भक्तजनसंसेवी मल्लिङ्गैकार्चनप्रियः ॥ 87

शैवशास्त्ररतो नित्यं शैवव्रतरतः सदा ।
काशीवासाय मुख्योऽयं मध्यमोऽप्युच्यते जनः ॥ 88

असञ्चिताकृष्टपच्यनीवारकणभोजनः ।
यथोक्तयात्रानिरतः सर्वसङ्गविवर्जितः ॥ 89

निर्ममो निरहङ्कारस्त्यक्तबन्धुनिराकुलः ।
सर्वदा धूपदीपाद्यैर्मल्लिङ्गार्चनतत्परः ॥ 90

वीतरागो गतस्नेहः पुत्रस्नेहादिवर्जितः ।
वेदान्तश्रवणासक्तो वेदाध्ययनतत्परः ॥ 91

कालभैरवपूजायां नियतः प्रतिवासरम् ।
इतोऽन्ये मनुजाः काश्यां तिष्ठन्तोऽपि नराधमाः ॥ 92

काशीवाससमुत्पन्नधर्मभागेन सर्वथा ।
प्रत्युतास्यां स्थिताः काश्यां पापमेवार्जयन्ति ते ॥ 93

तदन्यैर्मनुजैः काश्यां न स्थातव्यं कदाचन ।
तदन्यैरात्महत्यैव क्रियते स्थीयते यदि ॥ 94

मदुक्तकर्महीनैस्तु काश्यां न स्थेयमेव हि ।
काश्यां प्रतिग्रहो नैव कर्तव्यः सर्वथा जनैः ॥ 95

यदि मोहात्प्रमादाद्वा करोति स पतत्यधः ।
नीरं वा पाण्डुपत्राणि भक्षयित्वा यथाचितम् ॥ 96

स्थातव्यमनिशं काश्यां मुक्तिकामेन शैलजे ।
तत्तद्दिनार्जितैः धान्यैःनीवारैर्वा स्वकं वपुः ॥ 97

पोषणीयं नित्ययात्राशिवध्यानपरायणैः ।
दिनान्तराशनार्थाय सङ्ग्रहः सर्वथा जनैः ॥ 98

न कर्तव्यो न कर्तव्यः काश्यां प्रयतमानसैः ।
काश्यां प्रतिग्रहासक्तैर्धनसङ्ग्रहतत्परैः ॥ 99

स्थित्वान्ते यातना घोरा भोक्तव्या नात्रसंशयः ॥ 100

दुष्प्रतिग्रहसंसक्तैर्दुरन्नाशनलोलुपैः ।
अन्यायार्जितवित्तैश्च काश्यां न स्थेयमम्बिके ॥ 101

असत्यवादिभिर्दुष्टैर्विषयासक्तमानसैः ।
शिवाचारविहीनैश्च काश्यां न स्थेयमम्बिके ॥ 102

भस्मोद्धूलनरुद्राक्षजटाहीनैर्नराधमैः ।
लिङ्गपूजाविहीनैश्च काश्यां .... .... ॥ 103

मदन्यपूजनासक्तैर्मदन्यालोकनोत्सुकैः ।
मदन्याश्रयचित्तैश्च काश्यां .... .... ॥ 104

पुत्रस्नेहरतैर्लुब्धैर्धीवरैः पिशुनैर्जडैः ।
स्वदेहपोषणासक्तैः काश्यां .... .... ॥ 105

शिवद्वेषरतैर्मूढैः कृपणैः शिवनिन्दकैः ।
पञ्चाक्षरविहीनैश्च काश्यां .... .... ॥ 106

रागद्वेषाक्रान्तचित्तैर्मदनाक्रान्तविग्रहैः ।
राजसैस्तामसैः शून्यैः काश्यां .... .... ॥ 107

ईदृशैः पापनिरतैः स्थित्वा काश्यां यथेच्छया ।
देहान्ते यातनाः क्रूराः प्राप्तव्याः सत्यमुच्यते ॥ 108

परस्त्रीनिरतैः नष्टैः शिवशास्त्रविनिन्दकैः ।
शैवदुःखकरैः क्रूरैः काश्यां न स्थेयमम्बिके ॥ 109

पापभीरुभिरुत्कृष्टैः शैवशास्त्रविशारदैः ।
लिङ्गपूजापरैः शैवैः काश्यां स्थातव्यमम्बिके ॥ 110

भस्मत्रिपुण्ड्रनिटिलैः भस्मोद्धूलिततत्परैः ।
रुद्राध्यायजपासक्तैः शिववीक्षणतत्परैः ॥
निष्कल्मषपरैः शैवैः काश्यां स्थातव्यमम्बिके ॥ 111

रुद्राक्षमालाभरणैः जटामण्डलमण्डितैः ।
शिवध्यानरतैःशैवैःकाश्यां .... .... ॥ 112

महापाशुपतैर्धीरैर्योगशास्त्रविशारदैः ।
शिवाद्वैतपरैः शैवैः काश्यां .... .... ॥ 113

जितेन्द्रियैर्जिताहारैर्जीर्णपर्णाम्बुभक्षणैः ।
शिवैकशरणैः शैवैः काश्यां .... .... ॥ 114

रागद्वेषादिरहितैश्छिन्नसंसारबन्धनैः ।
सात्विकैरनघैः शैवैः काश्यां .... .... ॥ 115

कलत्रपुत्रमित्रेष्टस्नेहहीनैरनाकुलैः ।
शिवभक्तरतैः शैवैः काश्यां .... .... ॥ 116

यदृच्छालाभसन्तुष्टैः सुखदुःखविवर्जितैः ।
नित्यं यात्रापरैः शैवैः काश्यां .... .... ॥ 117

नित्यं मत्पूजनासक्तैः मद्भक्तजनसेवकैः ।
हृष्टान्तःकरणैः शैवैः काश्यां .... .... ॥ 118

अन्तर्गृहादियात्रायां नित्यमुद्युक्तमानसैः ।
मत्तत्वचिन्तकैः शैवैः काश्यां .... .... ॥ 119

अत्युत्सुकैरनिर्विण्णैः प्रतिग्रहपराङ्मुखैः ।
वशीकृतेन्द्रियैः शैवैः काश्यां .... .... ॥ 120

हर हर परमेशानन्दकन्देश शम्भो ।
शिव शिव करुणाब्धे शङ्कराशेषहेतो ।
भव भवभयहारिन् देव देवेति नित्यं
शिवनगरनिवासासक्तचित्ता वदन्ति ॥ 121

॥ इति श्रीशिवरहस्ये सप्तमांशे शिवगौरी-
संवादे अन्तर्गृहयात्राकथनं नाम
चतुर्थोऽध्यायः ॥



## ॥ पञ्चमोऽध्यायः ॥

**श्रीपार्वत्युवाच -**

महेशाखिलदेवेश काशीवासरतैर्नरैः ।
प्रत्यहं नियतं काश्यां किं कर्तव्यं वद प्रभो ॥

**श्रीशिव उवाच -**

कमलामलपत्राक्षि शृणु शैलसुतेऽमले ।
वक्ष्ये प्रात्यहिकं कर्म काशीवासेष्टचेतसाम् ॥

अरुणोदयवेलायामुत्थाय प्रत्यहं शिवे ।
पञ्चक्रोशाद्बहिर्दूराद्गन्तव्यं नियतेन्द्रियैः ॥

विलोक्य निर्जनं देशमूषरं तृणवर्जितम् ।
तृणैराच्छाद्य तं देशं मृदमाहृत्य नूतनाम् ॥

तीर्थान्यज्जलमाहृत्य बृहत्पात्रे प्रपूरयेत् ।
कर्णस्थब्रह्मसूत्रः सन् दक्षिणामुखमास्थितः ॥

कुर्यान्मूत्रपुरीषं च ततोऽन्यत्रोपसंविशेत् ।
मृदं त्रेधा विभज्याथ भागमेकं विभज्य च ॥

स्थूलामलकमानेन गृहीत्वा मृदमादरात् ।
शौचं कार्यं प्रयत्नेन गन्धलेपक्षयावधि ॥

करशौचं ततः कृत्वा पादशौचं निवर्तयेत् ।
अप्रमादेन मौनेन त्यक्त्वान्यालपनं तदा ॥ 8

पूर्वस्थापितमृद्भागद्वयेनैव यथाविधि ।
अन्यां वा मृदमानीय मरुदेशे स्थितां शुचिः ॥ 9

अपाने पञ्चधा हस्ते दशधा ते करद्वये ।
सप्तैका (सक्थेन्येका) पादयोरेका शेफे तिस्रः करे त्रिधा ॥

एवं गृहस्थैः कर्तव्यं द्विगुणं ब्रह्मचारिणा ।
त्रिगुणं वनवासैस्तु यतिभिस्तु चतुर्गुणम् ॥ 11

एतद्दशगुणं कार्यं महापाशुपतैर्वरैः ।
ततश्चतुर्गुणं कार्यं महाशैवैःशिवार्चकैः ॥ 12

ततो द्वादशगण्डूषैः कुर्याद्वक्त्रस्य शोधनम् ।
एकैकगुणवृद्ध्यं वमाशौचमृद(मिद)मादरात् ॥ 13

कर्तव्यं नियतैर्नित्यं शौचं पापापनोदकम् ।
नोचेदव्रतने कर्मण्यधिकारो न विद्यते ॥ 14

ततः खादिरकाष्ठाद्यैर्दन्तधावनमाचरेत् ।
पुनः प्रक्षाल्य वदनं प्रविशेत्स्वालयं ततः ॥ 15

ततः शुद्धासनासीनः शिवमद्वयमव्ययम् ।
चिन्तयित्वा ततो गच्छेत्स्नानायाहितमानसः ॥ 16

शिवलिङ्गप्रान्तदेशविलसद्विमले जले ।
सर्वपापहरे शुद्धे स्नानं कार्यं विधानत· ।।

तीर्थे द्वादशधा कार्यं मज्जनं पापनाशके ।
रुद्रसूक्तैर्मार्जनं च तत्तत्कार्यं प्रयत्नत: ।।

ततस्तीर्थे जले सम्यङ्निमज्ज्य नियतेन्द्रियैः ।
स्मर्तव्यः शङ्कर· साक्षादहमेव जगत्प्रभु: ।।

तर्पणीयास्तत: सम्यग्देवर्षिपितृदेवताः ।
परिधानं च कर्तव्यं ततश्चाहतवाससा ।।

ततः सम्यक्कुशासीन कुर्यादुद्धूलनं क्रमात् ।
आपादमस्तकं शुद्धसितार्द्रेणैव भस्मना ।

वामहस्ते विनिक्षिप्य भस्म सम्प्रोक्ष्य चोदकैः ।
सद्योजातादिमन्त्रैश्च तत. समभिमन्त्रयेत्

ततो मूर्ध्नि ललाटे च कर्णे कण्ठे च वक्षसि ।
नाभावंसे बाहुमूले प्रकोष्ठे मणिबन्धके ।।

बाहुपार्श्वे पाददेशे नेत्रयोर्गण्डमण्डले ।
कुर्यात्प्रयत्नतः सम्यक् त्रिपुण्ड्रं भस्मना शुचिः ।।

रुद्राक्षधारणं कार्यं यथाविधि ततः क्रमात् ।
ततश्च स्वस्वशाखोक्तसन्ध्या कार्या प्रयत्नतः ।।

ततो हुत्वा वह्निरूपे मय्येवाज्यादिसाधनैः ।
ततो मल्लिङ्गममलं पूजनीयं यथाविधि ।। 26

ततो विश्वेश्वरं नत्वा ममैव (मामेव) सुरपुङ्गवम् ।
पूजां कृत्वा विधानेन प्रणम्य च पुनः पुनः ।। 27

ततश्च नित्ययात्रार्थं कुर्याद्उद्योगमादरात् ।
नियतेन स्वार्जितेन गन्धपुष्पाक्षतादिना ।। 28

आदौ नियममास्थाय दण्डपाणिं यथाविधि ।
धूपदीपादिभिः सम्यक् अर्चयित्वा प्रणम्य च ।। 29

ध्यात्वा सम्यग्यथशास्त्रं दण्डपाणिं गणेश्वरम् ।
कृताञ्जलिपुटो भूत्वा ततो मन्त्रमिमं पठेत् ।। 30

नित्ययात्रां करिष्यामि दण्डपाणे प्रसीद मे ।
करुणाकर सर्वज्ञ सुरासुरनमस्कृत ।। 31

ज्ञानवाप्यामहं स्नातुमुद्युक्तोऽस्म्यघशान्तये ।
अतो देहि कृपासिन्धो शिवभक्त्येकजीवन ।। 32

इति संप्रार्थ्य नत्वा च दण्डपाणिं तदाज्ञया ।
यथाविधि तथा (ततः) स्नानं ज्ञानवाप्यां समाचरेत् ।।

ततश्चोद्धूलनं कृत्वा त्रिपुण्ड्रं च ततः परम् ।
रुद्राक्षधारणं कृत्वा शिवध्यानपरायणः ।। 34

ज्ञानेश्वराभिधं लिङ्गं सर्वेष्टफलदायकम् ।
प्रणम्य प्रार्थयेद्देवं प्रसीदेति पुनः पुनः ।। 35

ततश्च बिल्वपत्राद्यैः समभ्यर्च्य यथाविधि ।
तदाज्ञया ततः सम्यक् नत्वा पञ्च विनायकान् ।। 36

दधिदूर्वादिभिः सम्यगर्चयित्वा यथाविधि ।
तदाज्ञया ढुण्ढिराजमर्चयेन्नित्यमादरात् ।। 37

गन्धपुष्पाक्षतैः शुद्धैर्बिल्वपत्रैर्मनोरमैः ।
दूर्वाङ्कुरैर्यथायोग्यं नैवेद्यं च प्रकल्पयेत् ।। 38

प्रदक्षिणादिकं कृत्वा ढुण्ढीशं तं प्रणम्य च ।
तदाज्ञां समवाप्याथ पुनर्नत्वा गणेश्वरम् ।। 39

ततो मत्पूजनार्थाय पूजाद्रव्यं नवं शुभम् ।
गृहीत्वा नियमेनैव मुक्तिमण्टपमाश्रयेत् ।। 40

कृताञ्जलिपुटस्तत्र पठेन्मन्त्रममुं ततः ।
पुनः पुनः प्रणम्येशं तमीशानं तमव्ययम् ।। 41

शिवानन्त महादेव सोमार्धकृतशेखर ।
यथाशक्ति यथा (मया) पूजा क्रियते भक्तवत्सल ।।

इति संप्रार्थ्य मामेवं ततो नन्दीशमर्चयेत् ।
ततोऽभ्यर्च्य यथायोग्यं द्वारपालानपि क्रमात् ।। 43

ततो मामजरं नित्यं सर्वज्ञं सर्वतोमुखम् ।
लिङ्गरूपिणमीशानं ध्यात्वा सर्वोत्तमं शिवम् ॥ 44

शुद्धैस्तीर्थोदकैः सम्यगभिषिच्य यथाविधि ।
नमकं चमकं चैव पठनन्यान्मनूनपि । 45

ततश्च गन्धपुष्पाद्यैर्बिल्वपत्रैर्मनोहरैः ॥
धूपदीपैरनेकैश्च नैवेद्यैरर्चयेच्छिवम् ॥ 46

प्रदक्षिणनमस्कारनृत्यैश्च करताडनैः ।
नानाविधैः स्तोत्रपाठैः मामाराध्य यथाविधि ॥ 47

उपविश्य ततः शुद्धे निर्मले मुक्तिमण्टपे ।
स्वहृत्कमलमध्यस्थं चिन्तयित्वा सदाशिवम् ॥ 48

पञ्चाक्षरजपं कुर्याद्यथायोग्यं यथाक्रमम् ।
ततः परं पुनर्नत्वा पुनः सम्पूज्य मां विभुम् ॥ 49

अन्तर्गृहस्य यात्रार्थं कुर्यात्सङ्कल्पमादरात् ।
ततः षष्टिसहस्रेषु (स्राणि)गणनाथान् प्रपूजयेत् ॥ 50

अष्टाशीतिसहस्रेषु (स्राणि)भैरवांश्च ततः परम् ।
शतकोटिमहादुर्गाः पूजनीयाः प्रयत्नतः ॥ 51

ततः पुनर्ज्ञानवाप्यां स्नानं कृत्वा विधानतः ।
ततोऽन्तर्गृहयात्रापि कर्तव्या विधिपूर्वकम् ॥ 52

स्वशक्त्या संप्रसाद्यैव तानन्तर्गृहरक्षकान् ।
अन्तर्गृहस्थलिङ्गानि संपूज्याथ स्वशक्तितः ॥ 53

अन्तर्गृहस्थतीर्थेषु स्नानं कार्यं यथाविधि ।
तर्पणीयाश्च पितरो नित्यं यात्रापरैः शुभैः ॥ 54

पुनः स्नानं यथायोग्यं ज्ञानवाप्यां समाचरेत् ।
ततो ममान्तिकं गत्वा मामाराध्य यथाविधि ॥ 55

यात्रां निवेद्य स्वकृतां मह्यमेव प्रणम्य च ।
पुराणवचनैर्मन्त्रैः स्तोत्रैराराध्य मामजम् ॥ 56

विश्रम्याथ यथायोग्यं विमले मुक्तिमण्टपे ।
वीरेश्वराभ्यर्चनाय गन्तव्यं च ततः परम् ॥ 57

वीरेश्वरसमीपस्थे वीरतीर्थे पुनः शुभे ।
स्नानं कृत्वा प्रयत्नेन भक्तिपूर्वकमादरात् ॥ 58

ततो वीरेश्वरं सम्यक् पूजयित्वा यथाविधि ।
तदाज्ञां समवाप्याथ गच्छेत्पशुपतीश्वरम् ॥ 59

तत्र पाशुपते कुण्डे पुनः स्नात्वा यथाविधि ।
भस्मना बिल्वपत्रैश्च जपेत्पशुपतीश्वरम् ॥ 60

उपहारैरनेकैश्च नृत्यगीतैरपि प्रिये ।
समभ्यर्च्य ततो गच्छेत्संप्रार्थ्यास्तु तदाज्ञया ॥ 61

ईशमभ्यर्च्य तदनु गच्छेच्छ्रीकालभैरवम् ।
स्नात्वा च भैरवे तीर्थे यातनादुःखनाशके ॥ 62

श्रीकालभैरवं सम्यगर्चयेद्विधिपूर्वकम् ।
धूपदीपोपहारैश्च पुष्पैर्नानाविधैरपि ॥ 63

प्रदक्षिणनमस्कारैर्नृत्यगीतैरनेकधा ।
नानाविधोपचारैश्चपूजयेत्कालभैरवम् ॥ 64

ततस्तदाज्ञया गच्छेद्वक्रतुण्डविनायकम् ।
तद्वक्रतुण्डतीर्थेऽपि स्नात्वा विघ्नविनाशके ॥ 65

दूर्वाङ्कुरादिभिः सम्यगर्चयित्वा विनायकम् ।
वक्रतुण्डं प्रसाद्यैव तदाज्ञां समवाप्य च ॥ 66

आग्नीध्रेश्वरपूजार्थं गच्छेन्नियमपूर्वकम् ।
तत्रापि शिवगङ्गायां स्नानं कृत्वा विधानतः ॥ 67

शिवगङ्गोदकैः शुद्धैः सन्तर्प्य स्वपितॄंस्ततः ।
आग्नीध्रेशं ततः सम्यक्पूजयेदिष्टदायकम् ॥ 68

पुनर्मां सम्यगाराध्य ततश्च मदनुज्ञया ।
अन्नपूर्णापूजनार्थं गच्छेदर्घ्यं प्रगृह्य च ॥ 69

अन्नपूर्णामन्नदात्रीं ममैवार्धाङ्गभागिनीम् ।
सर्वसौभाग्यदां नित्यं स्वाभीष्टफलदायिनीम् ॥ 70

गन्धैः पुष्पैस्तथा धूपैर्दीपैश्च विविधैः फलैः ।
नैवेद्यैरर्चयेद्देवीं नानापूजोपहारकैः ॥ 71

प्रदक्षिणनमस्कारैरर्चयित्वा प्रसाद्य च ।
ततो निजालयं गत्वा पुनरभ्यर्च्य शङ्करम् ॥ 72

पञ्चयज्ञादिकं कृत्वा पुनः संपूज्य चातिथीन् ।
प्रणम्य च गुरून् वृद्धानन्यान्शैवोत्तमानपि ॥ 73

पत्रं फलं नीरमन्नमन्यद्वाऽयाचितार्जितम् ।
मह्यं निवेद्य तदनु भोक्तव्यं स्वस्थमानसैः ॥ 74

यद्यद्यदा यदा प्राप्यं पत्रं वा फलमेव वा ।
तत्तन्मह्यं निवेद्यैव भोक्तव्यं स्वस्थमानसैः ॥ 75

क्वचित्फलादिकं भक्ष्यं बहु चेत्प्राप्यते तदा ।
तद्दिनाशनमात्रं हि गृहीत्वाऽन्यद्विसर्जयेत् ॥ 76

कदाचिद्यदि न प्राप्तं कन्दमूलफलादिकम् ।
तदा तु जलमन्यद्वा गृहीत्वा संवसेद् दृढम् ॥ 77

स्वस्वाऽदृष्टानुरोधेन प्राप्यते यद्यदा यदा ।
तदल्पमस्तु बहु वा तुष्टस्तेन भवेत्सदा ॥ 78

यदल्पं प्राप्यते भक्ष्यं तदा दुःखी न संवसेत् ।
दुःखेनतपसो नाशो भविष्यति न संशयः ॥ 79

सुखार्थं कामभोगार्थं काश्यां न स्थीयते जनः ।
किन्तु मोक्षार्थमेवात्र स्थीयते मोक्षकाङ्क्षिभिः ॥ 80

पूर्वं मुक्त्यर्थिनः सर्वे निराहारा जितेन्द्रियाः ।
शैवास्तद्ज्ञाःस्थितास्तैस्तु मह्यं रूपं समागतम् ॥ 81

इदं प्रात्यहिकं कर्म काशीवासरतैस्सदा ।
कर्तव्यमतियत्नेन यातनाभीरुभिः शुभे ॥ 82

अतिक्रूरं कृपाहीनं मत्वा श्रीकालभैरवम् ।
इदं प्रात्यहिकं कर्म काश्यां कर्तव्यमादरात् ॥ 83

उक्तं प्रात्यहिकं कर्म त्यक्त्वा यदि वसेन्नरः ।
स सर्वयातनाभोक्ता भवत्येव न संशयः ॥ 84

आचन्द्रार्कं महाघोरे नरके वसतिर्वरा ।
सा सोढुं शक्यते नेयं क्षणं भैरवयातना ॥ 85

कोपदावाग्निना दग्धान् क्षणादेव हि भैरवः ।
करोति काश्यां पापिष्ठान्दयामात्रविवर्जितान् (तः) ॥

कालभैरवपर्यन्तं क्व समायान्ति पापिनः ।
तद्भृत्यैरेव नीयन्ते पापिष्ठा यातनाश्रयाः ॥ 87

कालभैरवभृत्यानां सङ्ख्या कर्तुं न शक्यते ।
महावीरा मदोन्मत्ता दुर्धर्षास्त्रिदशैरपि ॥ 88

कदाचिद्गणिताःसन्ति पांसुसैकततारकाः ।
कालभैरवदूतास्तु न सङ्ख्येया हि सर्वथा ॥ 89

काश्यां पापरतं मर्त्यं कालभैरवकिङ्कराः ।
गृहीत्वा यान्ति दुर्धर्षास्तमभिज्ञाप्य भैरवम् ॥ 90

नीत्वा हसन्तो गायन्तः पापिष्ठं प्रदहन्ति ते।
तप्ततैले पातयित्वा पाचयन्ति पुनः पुनः ॥ 91

ताडयन्ति कशाघातैः शूलाग्रैः प्रोथयन्ति ते ।
सन्तप्तायसपिण्डैश्च ताडयन्ति यथेच्छया ॥ 92

कथं वा न कृता दुष्ट नित्ययात्रा तदा पुरा ।
तप्तायःफलमेवाद्य भुङ्क्ष्वेत्युक्त्वा निहन्यते ॥ 93

कथमन्तर्गृहे यात्रा दुर्बुद्धे न कृता त्वया ।
तत्पापफलमेवाढ्य (द्य) भुङ्क्ष्वेत्युक्त्वा निहन्यते ॥ 94

अनभ्यर्च्यैव विश्वेशं कथं भुक्तं त्वया तदा ।
तत्पापफलमेवाद्य भुङ्क्ष्वेत्युक्त्वा निहन्यते ॥ 95

अस्नात्वैव त्वया ज्ञानवाप्यां भुक्तं तदा मुदा ।
तत्पापफलमेवाद्य भुङ्क्ष्वेत्युक्त्वा निहन्यते ॥ 96

श्रीकालभैरवः शास्ता कथं वा नार्चितस्तदा ।
तत्पापफलमेवाद्य .... .... ॥ 97

त्वया नाभ्यर्चितः पूर्वं तदा पशुपतीश्वरः ।
तत्पापफलमेवाद्य .... .... ॥ ९८

त्वया वीरेश्वरः पूर्वं सम्यङ्नाभ्यर्चितस्तदा ।
तत्पापफलमेवाद्य .... .... .... ॥ 99

कथं वा न कृतं पूर्वं पञ्चाक्षरजपादरम् ।
तत्पाप .... .... .... ॥ 100

कथं त्वया कृतं पूर्वं शिवक्षेत्रस्य दूषणम् ।
तत्पाप .... .... .... ॥ 101

पुरा त्वया दुष्टचित्त शिवनिन्दा श्रुता कथम् ।
तत्पाप .... .... .... ॥ 102

त्वया दुर्भग दुर्बुद्धे काशीनिन्दा कथं कृता ।
तत्पाप .... .... .... ॥ 103

पुरा बिल्वदलैः शम्भुस्त्वया नाभ्यर्चितस्तदा ।
तत्पाप .... .... .... ॥ 104

अन्तर्गृहे सदा दुष्ट मूत्रोत्सर्गस्त्वया कृतः ।
तत्पाप .... .... .... ॥ 105

तदा शैवजनद्रोहास्त्वया दुष्ट पुरा कृताः
तत्पाप .... .... .... ॥ 106

विभूतिधारणं त्यक्त्वा तदा भुक्तं त्वया पुरा ।
तत्पाप .... .... .... ॥

लिङ्गपूजामकृत्वैव त्वया भुक्तं तदा पुरा ।
तत्पाप .... .... .... ॥

शिवनिन्दा कृता पूर्वं त्वया पापरतेन हि ।
तत्पाप .... .... .... ॥

शिवेत्येव परं नाम न कथं जपितं त्वया ।
तत्पापफलमेवद्य .... .... .... ॥

अस्नात्वा शिवगङ्गायां कथं भुक्तं त्वया तदा ।
तत्पापफलमेवाद्य ॥

कथं त्वया कृतं मूर्ख शैवे निष्ठुरभाषणम् ।
तत्पापफल .... .... .... ॥

कथं त्वया कृतं मूर्ख बिल्वस्यास्कन्दनं पुरा ।
तत्पापफलमेवाद्य .... ... .... ॥

सेविता न कथं मूर्ख शैवाः शिवपरायणाः ।
तत्पापफलमेवाद्य .... .... .... ॥

न पञ्चक्रोशयात्रापि प्रतिपक्षे त्वया कृता ।
तत्पापफलमेवाद्य .... .... .... ॥

काश्यां स्थित्वापि सततं न कृतं सत्यभाषणम् ।
तत्पापफलमेवाद्य .... .... .... ॥ 116

ज्ञानवाप्यां त्वया पूर्वं कथं निष्ठीवनं कृतम् ।
तत्पापफलमेवाद्य .... .... .... ॥ 117

एवमन्यानि पापानि स्मृत्वा स्मृत्वा पुनः पुनः ।
तप्तशूलादिभिः सम्यक्ताडयन्त्यतिदारुणम् ॥ 118

पुरा द्विजाधिपः कश्चिच्छिवभक्तिपरायणः ।
शरदामयुतं चक्रे काशीवासं स्वधर्मतः ॥ 119

नित्यान्तर्गृहयात्रादि कुर्वन्विजितमानसः ।
निराहारेण सततं न्यवसद्दुःखवर्जितः ॥ 120

कदाचित्तद्गुरुर्वृद्धः शिष्यं वीक्ष्य कृपाकृतिः ।
तमुवाच ततःप्रीत्या प्रणतानतकन्धरम् ॥ 121

शिष्य जीर्णं शरीरं ते शक्तिस्त्वयि न दृश्यते ।
न कर्तव्यो निराहारस्त्वयाद्यावधि सत्तम ॥ 122

जलानि जीर्णपत्राणि फलं वा मूलमेव वा ।
अयाचितं यदि प्राप्तं तदा तद्भुङ्क्ष्व सादरम् ॥ 123

शुद्धैरुपोषणैरूनं शरीरं जायते तव ।
यथेच्छं नोपभोक्तव्यमल्पं भुङ्क्ष्व यथोचितम् ॥ 124

मलादीन्यपि जायन्ते जन्तूनामन्नभक्षणात् ।
तद्भयं तु महत्काश्यामप्रमादेन संवस ॥

शर्वर्याः पश्चिमे यामे पञ्चक्रोशाद्बहिर्व्रज ।
कुरु तत्रैव नियतं मलमूत्रविसर्जनम् ॥

शौचादिकं यथाशास्त्रं कुरु सन्ततमादरात् ।
ततः काश्यां समागत्य कर्म प्रात्यह्निकं कुरु ॥

इत्युक्तो गुरुणा सोऽपि तथा चक्रे ततः परम् ।
एवं निवसतस्तस्य भूयान्कालो गतस्तदा ॥

अन्तर्गृहस्य यात्रादि कृत्वा सर्वं कदाचन ।
पपातान्तर्गृहे श्रान्तो मूर्च्छितः स्विन्नविग्रहः ॥

ततस्तत्रैव तद्देहान्मलमूत्रादि निःसृतम् ।
ततः स चेतनां प्राप्य स्वाश्रमं प्रति संययौ ॥

स चाथ स्वकृतं कर्म स्मृत्वा स्मृत्वा पुनः पुनः ।
रुरोद बहुदुःखेन पापभीरुर्द्विजोत्तमः ॥

तदाप्रभृतिविप्रोऽसावाहारं संत्यजत्ततः (संत्यजंस्तत
निराहारं ततश्चक्रे तन्स्मृत्वा पापमन्वहम् ॥

प्रबुध्यमानस्तत्पापशान्त्यै संवत्सरायुतम् ।
वह्निमध्ये स्थितो नित्यमेकपादेन सादरम् ॥

तेनापि घोरतपसा तावत्कालं कृतेन च ।
न शान्तं तादृशं पापं प्रवृद्धं च क्षणे क्षणे ॥ 134

ततः स चायुषि क्षीणे काश्यामेव मृतो द्विजः ।
असह्यदुःखभोगार्थं बहुकालेषु सर्वदा ॥ 135

मृतं विलोक्य तं क्रूराः कालभैरवकिङ्कराः ।
गृहीत्वा संययुः शीघ्रं हृष्टचित्ता दुरासदाः ॥ 136

नीत्वा तमग्नौ निक्षिप्य दग्ध्वा सम्यक् पुनः पुनः ।
तीव्रैस्ततः काशाघातैर्ददुः दुःखं मुहुर्मुहुः । 137

मलमूत्रादिकं दुष्ट कथमन्तर्गृहे कृतम् ।
तत्पापनाशको धर्मः कोऽपि वेदे न दृश्यते ॥ 138

तादृशं हि महत्पापं केन नाशं प्रयास्यति ।
कथं वा यातनादुःखं निवृत्तं ते भविष्यति ॥ 139

अन्तर्गृहे तु लिङ्गानि दिव्यान्यत्यद्भुतानि च ।
निवसन्त्यतिसंमर्दं सङ्ख्या तेषां न विद्यते ॥ 140

अन्तर्गृहे कृतं यत्तु मलमूत्रादिकं नरैः ।
लिङ्गे पतति तद्घोरं यातनाकारणं सदा ॥ 141

त्वया कृतं महत्पुण्यं सर्वं यद्यपि सर्वदा ।
स धर्मस्तेन पापेन सर्वो नष्टो न संशयः ॥ 142

एवं सन्तर्ज्य सन्तर्ज्य भैरवस्यैव किङ्कराः ।
अशीतियुगपर्यन्तं दग्ध्वा तमथ ते भटाः ॥ 143

बद्धा पाशैस्ताडयन्तः सन्तप्तायसश्रृङ्खलैः ।
गृहीत्वा भैरवस्याग्रे चिक्षिपुः कुपिता भृशम् ॥ 144

भैरवोऽपि स तं दृष्ट्वा भ्रुकुटीकृतलोचनः ।
अपृच्छत्कोऽयमित्येतान् कुपितश्च भटान् प्रति ॥ 145

**भृत्या ऊचुः -**

श्रीकालभैरव श्रीमन् महेशप्रियकृद्वर ।
पापिमत्तेभपञ्चास्य पञ्चास्यपुररक्षक ॥ 146

अयं महापातकिनामग्रगण्यो दुरासदः ।
अनेनान्तर्गृहे पूर्वं मलमूत्रादिकं कृतम् ॥ 147

इति तद्वचनं श्रुत्वा भैरवो भीमविक्रमः ।
चुकोपारुणदीर्घाक्षः प्रज्वलत्पर्वतोपमः ॥ 148

ततस्तत्कोपजो वह्निरुत्थितः प्रज्वलो महान् ।
तमग्निमुत्थितं दृष्ट्वा चुक्रोशोच्चैर्भयाद् द्विजः ॥ 149

स एव ध्वनिरत्युच्चैर्ब्रह्मलोकादिलोकगः ।
सर्वेषां च भयं चक्रे तत्तल्लोकनिवासिनाम् ॥ 150

तमेवार्तस्वरं श्रुत्वा तूष्णीमासमहं तदा ।
विधिः श्रुत्वाऽऽतुरं शब्दं स सभ्यः(सद्यः) कम्पमागतः ॥

कोऽयमार्तसरः क्रूरः स प्रविश्योदरं मम ।
तनोति दुःखमत्यन्तमिति ब्रह्मा रुरोद च ॥ 152

मया दुःखकरः शब्दो न श्रुतः पूर्वमीदृशः ।
सोऽयं कुतःसमुत्पन्नः किमेतस्यास्ति कारणम् ॥ 153

इत्याश्चर्यसमायुक्तस्तदा शङ्करकिङ्करम् ।
अपश्यदूर्ध्वलोकेषु स चरन्तं शिवप्रियम् ॥ 154

तमालोक्याथ विनयात्प्रणम्य च पुनः पुनः ।
उपवि(वे)श्यासने रम्ये सम्पूज्य च कृताञ्जलिः ॥ 155

वाचस्पतिरिव श्राव्यं मधुराक्षरसंयुतम् ।
उवाच वचनं चारु विनयानतकन्धरः ॥ 156

**ब्रह्मोवाच** -

श्रीमन् शिवप्रिय श्रेष्ठ शैवोत्तम जितेन्द्रिय ।
कुतःसमागतं कुत्र सञ्चारः क्रियते सदा ॥ 157

अयमार्तस्वरः कुत्र सर्वलोकभयावहः ।
किमस्ति कारणं लोके तत्सर्वं वक्तुमर्हसि । 158

**भैरव उवाचः -**

पुरा कश्चिद्द्विजः काश्यामन्तर्गेहे शिवात्मके ।
मलमूत्रादिकं कृत्वा तत्रैव स ततो मृतः ॥ 159

कालभैरवभृत्यैस्तु पुरा सन्ताडितस्ततः ।
भैरवाग्रे स्थापितोऽस्ति स एवाघौघसंश्रयः ॥ 160

इदानीमपि पापिष्ठो भैरवेण न ताडितः ।
किंतु तत्कोपसम्भूतप्रलयानलताडितः ॥ 161

चुक्रोशात्यर्थमत्युच्चैर्दुःसहानलताडितः ।
दुःखशामकरो धर्मो नेदृशस्येह विद्यते ॥ 162

अमुं दग्ध्वातिकोपेन भैरवस्तदनु ध्रुवम् ।
पट्टुदीर्घकरा(शा)घातैस्ताडयिष्यति दारुणम् ॥ 163

सन्तप्ततैलपात्रेषु पातयिष्यन्त्य(त्य)संशयम् ।
तप्तक्रकचशूलाग्रे दारयिष्यन्ति(ति)तत्तनुम् ॥ 164

सन्तप्तभिण्डिपालाग्रे पातयित्वाऽति दारुणे ।
ततः पुनः पुनर्दग्ध्वा पुनः सन्ताडयिष्यति ॥ 165

यातना बहुधाऽनेन भोक्तव्या बहुकालिकी ।
यतःशैवे शिवमये मलाद्यन्तर्गृहे कृतम् ॥ 166

इत्युक्त्वा स तदोत्थाय ब्रह्मणा पूजितस्ततः ।
चचार विविधान् लोकान् यथेच्छं प्रीतमानसः ।। 167

ब्रह्मा तद्वचनं श्रुत्वा काशीदर्शनलालसः ।
सभासद्भिःसह प्रीत्या काशीं प्रति समाययौ ।। 168

दुर्गागणान्भैरवांश्च गणेशान्प्रमथाधिपान् ।
काशीसंरक्षकानन्यान्प्रसाद्य च पुनः पुनः ।। 169

काशीं मन्दारपुष्पाद्यैरभिपूज्य यथाविधि ।
विवेश काशीममलां सर्वाभीष्टफलप्रदाम् ।। 170

ततः स शिवगङ्गायां स्नानं चक्रे यथाविधि ।
तत्राग्नीध्रेश्वरं सम्यक्पूजयित्वा तदाज्ञया ।। 171

स सभासद्भिरनघैस्सहैवाग्रे समाययौ ।
विश्वेश्वराभिधं दिव्यं लिङ्गं द्रष्टुं समुद्यतः ।। 172

मध्येमार्गे(र्गं) वक्रतुण्डमभ्यर्च्य तदनुज्ञया ।
श्रीकालभैरवं द्रष्टुमाययौ भयविह्वलः ।। 173

तदा ददर्श वीरं तमुग्रशासनमव्ययम् ।
प्रज्वलद्गिरिसङ्काशं विवृत्तास्यं भयानकम् ।। 174

दीर्घदंष्ट्रं महाबाहुं दहन्तं तेजसा युतम् ।
धृतदीर्घकशाधीरमत्युग्रं शूलधारिणम् ।। 175

अनन्तकिङ्कराधीशसंवृतं नीललोहितम् ।
स्वर्गादिलोकानखिलान्दहन्तमिव संस्थितम् ।।

स कालभैरवं दूरात् दृष्ट्वा तत्कोपवह्निना ।
सन्ताडितः क्षणार्धेन न्यपतद्भुवि मूर्च्छितः ।।

सभासदोऽपि न्यपतन्ब्रह्मणोऽमितविक्रमाः ।
तत्कोपवह्निज्वालाभिराहताः क्षणमात्रतः ।।

ते संज्ञां समवाप्यैवं बहुकालेन पीडिताः ।
ततो विश्वेश्वरं द्रष्टुमन्यमार्गेण ते शुभे ।।

ययुराश्चर्यसम्पन्नाः कम्पमानाः पुनः पुनः ।
नानाविधोपचारा(रै)स्ते दण्डपाणिं प्रसादयन् (?

ततस्तदाज्ञया सम्यक् ज्ञानवापीं प्रणम्य ते ।
तत्र स्नानविधानेन ज्ञानेशं प्रणिपत्य च ।।

विनायकान् समभ्यर्च्य ढुण्ढिराजं प्रपूज्य च ।
मुक्तिमण्टपमासाद्य मामजं विश्वतोमुखम् ।।

विश्वतश्चक्षुषं देवं विश्वतोबाहुमव्ययम् ।
नानाविधानन्तरत्नैर्नानापुष्पैः सुगन्धिभिः ।।

नानाविधोपचारैश्च सम्पूज्य तदनन्तरम् ।
प्रदक्षिणनमस्कारैर्नृत्यगीतैर्मनोरमैः ।।

स्तोत्रपाठैर्मन्त्रपाठैः सम्यगाराध्य मां ततः ।
अन्तर्गृहादियात्रां च कृत्वा सम्यग्यथाविधि ।। 185

दिनाष्टकमुषित्वा ते ब्रह्मलोकमुपागताः ।
ब्रह्माद्याश्च ततः सर्वे भैरवानलतापिताः ।। 186

विक्रमं भैरवस्यैव शंसन्तो न्यवसन्मुदा । 187

धर्मेणैव सदा वसन्ति मुनयःकाश्यां प्रकाश्यां मुदा
भीमं भैरवमुग्रशासनमजं मत्वा प्रमादैर्विना ।
मामाराध्यमनन्तमव्ययमजं मोक्षप्रदं शाश्वतं
सम्पूज्यान्वहमम्बिके बहुविधैरर्चोचपारैर्भृशम् ।।

।। इति श्रीशिवरहस्ये सप्तमांशे शिवगौरी-
संवादे काशीमाहात्म्ये काशीवास-
नियमविधिकथनं नाम
पञ्चमोऽध्यायः ।।



## ॥ षष्ठोऽध्यायः ॥

**श्रीपार्वत्युवाच -**

शिव कल्याणद श्रीमन् सर्वज्ञामितविक्रम ।
ज्ञानवापीति संज्ञेयमस्याः कथमभूद्वद ॥

**श्रीशिव उवाच -**

त्रिशूलाग्रेण सुभगे सा वापि खनिता पुरा ।
आपातालं जलं तत्र तिष्ठत्यतिमनोहरम् ॥

काश्मीरमणिभिः शुभ्रैः पुष्परागैर्मनोहरैः ।
रत्नैरन्यैश्च विविधैर्बद्धा सा तदनन्तरम् ॥

तत्राद्भुतं समभवद्धेमपद्मं वरानने ।
विचित्रगन्धसम्बद्धं शतयोजनमायतम् ॥

सहस्रदलसंसक्तं केसरागरुरञ्जितम् ।
तत्सुगन्धेन निर्गन्धं सुगन्धमभवज्जलम् ॥

तत्प्रान्तकल्पतरवस्तत्सुगन्धसमन्विताः ।
स्वतः सुगन्धा इव ते भान्ति नित्यं वरानने ॥

तत्पद्ममकरन्देन संयुतं राजते जलम् ।
तत्तिरस्कृतपीयूषं सुराणामपि दुर्लभम् ॥

सदा विकासमापन्नं सदा प्रेक्ष्यमनुत्तमम् ।
कदाचिदपि तन्म्लानं न भवत्येव सर्वदा ।। 8

कनत्कनकनालाढ्यं तद्धेमकमलं शुभम् ।
हेमच्छत्रमिवाभाति काश्याः कमललोचने ।। 9

तत्कर्णिकामध्यदेशे सुन्दरे मृदुले सदा ।
कदाचिल्लीलया सम्यगुविश्य वसाम्यम् ।। 10

संविष्टस्तत्र (ष्टं तत्र) मामेका कदाचिद्वरवर्णिनी ।
स्तुत्वा तु बहुधा स्तोत्रैः सम्पूज्य विधिपूर्वकम् ।। 11

कृताञ्जलिपुटा तस्थौ पीनवक्षोजभासुरा ।
विद्युल्लतेव विमला कमलामललोचना ।। 12

ततो मयैव सा पृष्टा कासि त्वमसि (मिति) सा ततः ।
उवाच वचनं चारु सर्वलोकहितावहम् ।। 13

शङ्कराहमिह स्वामिन्नेतत्तीर्थाधिदेवता ।
मत्प्रार्थितं वरं देहि वरदानविचक्षण ।। 14

इदं जलं महादेव शैवो यः पातुमिच्छति ।
तस्य त्वचञ्चला भक्तिस्त्वयि तत्वमतिस्तथा ।। 15

ज्ञानवापीति मन्नाम प्रसिद्धं भवतु प्रभो ।
सर्वपापक्षयकरं जलं भवतु सर्वदा ।, 16

इति संप्रार्थ्य(र्थितं) तत्सम्यक् तया लेकेष्टसिद्धये ।
तद्याचितं वरं दत्वा तामाश्वास्य पुनः पुनः ॥ 17

मया तत्रैव सततं स्थीयते वरवर्णिनि ।
रोचते वसतिस्तत्र कमले गन्धसंवृते ॥ 18

तादृशं तीर्थममलं सर्वलोकेषु दुर्लभम् ।
स्नानं कृत्वा प्रयत्नेन द्वादशीसोमवासरे ॥ 19

तत्र देवानृषीन्सम्यक् तर्पयित्वा पितॄनपि ।
तज्जलैः स्वादुभिः सम्यग्ज्ञानेशमभिषिच्य च ॥ 20

गन्धपुष्पक्षताद्यैश्च पूजयित्वा याथाविधि ।
प्रदक्षिणनमस्कारैराराध्य तदनुज्ञया ॥ 21

मुक्त्यर्थं त्रिः पिबेत्सम्यग्ज्ञानेशस्नापनोदकम् ।
तत्तोयपानमात्रेण शुद्धो भवति मानवः ॥ 22

ततस्तद्धृदये शुद्धे जायते लिङ्गमुत्तमम् ।
अत एव हि तत्तीर्थं तीर्थोत्तममिति श्रुतम् ॥ 23

तत्तीर्थराजरक्षार्थं दण्डपाणिर्बलोन्नतः ।
मया संस्थापितः शक्तस्तत्तीरे विमले शुभे ॥ 24

विना तदाज्ञया लोके येन केनापि वा शुभे ।
स्प्रष्टुं न शक्यते नूनं तत्तीर्थं मुक्तिसाधनम् ॥ 25

पुरा ब्रह्मादिभिः साकं विष्णुः काशीदिदृक्षया ।
समाययौ ततो दृष्ट्वा दूरात्काशीं मनोहराम् ॥ 26

प्रणम्य दण्डवद्भूमौ भूयोभूयः कृताञ्जलिः ।
अवाप परमानन्दं दृष्टा काशीति सादरम् ॥ 27

इदमक्षियुगं धन्यं पुण्डरीकनिभं शुभम् ।
येन (यतः) शिवस्वरूपेयं काशी दृष्टा मयाऽधुना ॥ 28

रत्नपङ्कजसङ्काशाविमौ धन्यौ करौ मम ।
येन (याभ्यां) काशी मया पूज्या महेशस्यापरा तनूः ॥ 29

इदं धन्यं शरीरं मे येन काशी शिवात्मिका ।
आलिङ्गनीया यत्नेन सर्वपापापनोदिनी ॥ 30

धन्योऽस्म्यहं पुनीतोऽस्मि (सुपूतोऽस्मि) ।
भाग्यवानस्मि सर्वदा ।
यतः शिवस्वरूपेयं काशी संप्रापिता मया(?) 31

मदन्यो भाग्यवांल्लोके नास्ति नास्त्येव सर्वथा ।
यतो मोक्षप्रदा दिव्या काशी संप्रापिता मया ॥ 32

कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि न संशयः ।
यतः साम्बमयी काशी प्राप्यते पुण्यसंश्रयात् ॥ 33

महद्भाग्यं महद्भाग्यं महद्भाग्यं मया धुना ।
यतो मया शिवाकारा काशी संप्राप्यते शिवा ॥ 34

सकृत्काशीति नाम्नैव स्मृत्वा पातकिनः पुरा ।
शिवसारूप्यमापन्नाः सा काशी दृश्यते मया ॥ 35

यस्यां सर्वेश्वरः शम्भुः साम्बः संसरमोचकः ।
वसन्ति (वसतिं) सर्वदा चक्रे सा काशी दृश्यते मया ॥ 36

यस्यां वैश्वेश्वरं ज्योतिर्लिङ्गरूपं सनातनम् ।
निवसत्यनिशं श्रेष्ठं सा काशी दृश्यते मया ॥ 37

यस्यामम्बासमेतः सन् दिव्यरूपधरः शिवः ।
करोति लीलामनिशं सा काशी .... ॥ 38

यस्यां ज्ञानप्रदा नित्यं ज्ञानवापी मनोहरा ।
तिष्ठत्यमलकल्लोला सा काशी .... ॥ 39

यस्यां पूर्णेन्दुवदना परमान्नप्रदायिनी ।
अन्नपूर्णा स्थितिं चक्रे सा काशी .... ॥ 40

यस्यां तिष्टति ढुण्ढीशः सर्वेष्टफलदायकः ।
सर्वविघ्नहरो नित्यं सा काशी .... ॥ 41

यस्यां शिवरतो नित्यं दण्डपाणिः शिवप्रियः ।
तिष्ठत्यतीव सन्तुष्टः सा काशी .... ॥ 42

यस्यां सर्वेश्वरः श्रीमान् करुणानिधिरव्ययः ।
चकार वसतिं नित्यं सा काशी .... ॥ 43

यस्यां तिष्ठति वेदेड्यः सदा पशुपतीश्वरः ।
पशुपाशविमोक्षाय सा काशी .... ॥ 44

यस्यां तिष्ठति सर्वेषां शास्ता श्रीकालभैरवः ।
भक्तकल्पतरुः श्रीमान् सा काशी ॥ 45

यस्यामन्तर्गृहं नाम क्षेत्रं शिवमयं शिवम् ।
तिष्ठति श्रीकरावासं सा काशी .... ॥ 46

यस्यामस्ति विशालाक्षी शिवस्यार्धाङ्गभागिनी ।
भक्ताभीष्टप्रदा नित्यं सा काशी .... ॥ 47

यस्यां त्यक्ततनुर्मर्त्यः शैवः शिवपरायणः ।
शिवाकारमवाप्नोति सा काशी .... ॥ 48

यस्यां मोक्षार्थिनः शैवाः निराहाराः शिवार्चकाः ।
निवसन्त्यनिशं शुद्धाः सा काशी .... ॥ 49

यस्यां प्रात्यहिकं कर्म कृत्वा तिष्ठन्ति सादरम् ।
पापलेशविहीनाश्च सा काशी .... ॥ 50

यस्याः प्रभावं वेदाश्च न जानन्त्येव सर्वथा ।
किमन्यानि पुराणानि सा काशी .... ॥ 51

यया तुलयितुं वस्तु नास्ति ब्रह्माण्डगोलके ।
सर्वार्तिनाशिनी धन्या सा काशी .... ॥ 52

एवं वदंस्तदा विष्णुः काशीनिकटमादरात् ।
ततश्चक्रे प्रणामानि(?) दण्डवत्स पुनः पुनः ॥ 53

ततो नानाविधैः पुष्पैर्दिव्यरत्नैर्मनोहरैः ।
नानाविधोपचारैश्च काशीपूजां चकार सः ॥ 54

ततो नानाविधान् क्रूरान्काशीसंरक्षणा(का)न् गणान् ।
सम्पूज्य तदनुज्ञातः काशीमाविशम(द)म्बिके ॥ 55

ततः स शिवगङ्गायां यथाशास्त्रं यथाक्रमम् ।
स्नानं कृत्वा प्रयत्नेन चकारोद्धूलनं ततः ॥ 56

त्रिपुण्ड्रधारणं कृत्वा मन्त्रपूतेन भस्मना ।
रुद्राक्षधारणं चक्रे सर्वपातकनाशनम् ॥ 57

आग्नीध्रेश्वरमासाद्य पूजाद्रव्येण सादरम् ।
सम्पूज्य नत्वा विविधैः स्तोत्रैः स्तुत्वा सदाशिवम् ॥ 58

ततस्तदाज्ञया विष्णुर्वक्रतुण्डमुपागतः ।
तत्र स्नात्वा विधानेन वक्रतुण्डं विनायकम् । 59

सम्यगाराध्य विधिवत्पुनःसादरपूर्वकम् ।
समभ्यर्च्यातियत्नेन कालभैरवमागतः ॥ 60

कालकुण्डे यथाशात्रं स्नात्वा विष्णुस्ततः परम् ।
क्षीराज्यमधुभिः सम्यगभिषिच्य च भैरवम् ॥ 61

दिव्यमन्दारपुष्पौघैरुपहारैश्च शोभनैः ।
प्रसाद्य भैरवं देवं प्रणम्य च तदाज्ञया ।। 62

तत्प्रान्तदिव्यलिङ्गानि पूजयामास सादरम् ।
पापभक्षेश्वरं चैव सम्पूज्य तदनन्तरम् ।। 63

ततः सन्तोषमाश्रित्य (मापन्नो) वीरेशं समुपागतः ।
तत्र वीरेशकुण्डेऽपि पुनः स्नात्वा विशेषतः ।। 64

ततो ददर्श वीरेशं भक्तवत्सलमव्ययम् ।
दृष्ट्वा प्रणम्य बहुधा पूजां चक्रे स सादरम् ।। 65

ततस्तदाज्ञां संप्राप्य ययौ पशुपतीश्वरम् ।
तत्र पाशुपतं कुण्डं विलोक्यातिमनोहरम् ।। 66

स्नानं चक्रे विधानेन नत्वा पशुपतीश्वरम् ।
चक्रे पूजां विधानेन पूजाद्रव्याणि (व्येण) सादरम् ।। 67

ततस्तदाज्ञया तुष्टो दण्डपाणिमुपागतः ।
दण्डपाणिं समभ्यर्च्य प्रसाद्य तदनुज्ञया ।। 68

ज्ञानवापीं प्रणम्याग्रे संपूज्य च यथोचितम् ।
स्नानं चक्रे ततः सम्यग्विधिपूर्वकमादरात् ।। 69

ततो ज्ञानेशमभ्यर्च्य नत्वा पञ्चविनायकान् ।
ढुण्ढिराजार्चनं चक्रे स विष्णुर्विधिपूर्वकम् ।। 70

ततः स तदनुज्ञातो मुक्तिमण्डपमाययौ ।
ततो नन्दीशमभ्यर्च्य द्वारपालानपि क्रमात् ॥ 71

चकार मदनुज्ञातो ममाराधनमादरात् ।
आदौ पञ्चामृतैः सम्यगभिषिच्य यथाविधि ॥ 72

कामधेनुप्रसादेन सम्प्राप्तैरमलैर्नरैः(घटैः) ।
तीर्थोदकं समाहृत्य स्वयमेव जनार्दनः ॥ 73

अभिषेकं ततश्चक्रे रुद्रसूक्तेन सादरम् ।
ततः परिमलैर्द्रव्यैरभिपूज्य यथाविधि ॥ 74

अनर्घ्यरत्नैरकरोत्पूजां तदनु सादरम् ।
नवैः स्वोपहृतैः शुद्धैर्बिल्वपत्रैर्मनोहरैः ॥ 75

मन्दारपुष्पैरमलैरन्यैश्च कुसुमैर्नवैः ।
विचित्ररत्नमालाभिः सुवर्णाभरणैरपि ॥ 76

भक्त्या सम्पूजयामास विष्णुः श्रद्धासमन्वितः ।
ततो मनोहरैर्दिव्यैर्नैवेद्यैरतिशोभनैः ॥ 77

धूपदीपादिभिश्चापि तोषयामास मां शुभम् ।
ततः प्रदक्षिणादीनि कृत्वा नत्वा यथाविधि ॥ 78

स्तोत्रैश्च विविधैः स्तुत्वा चकारान्तर्गृहादिकम् ।
एवं वर्षायुतं विष्णुर्नित्यं यात्रापरायणः ॥ 79

उपास्य काश्यां सन्तुष्टःश्रृण्वन्शिवकथाः शुभाः ।
शिवैकशरणो नित्यं स्थिरलिङ्गार्चने रतः ॥ 80

गन्तुकामस्ततो विष्णुः कदाचिदिदमब्रवीत् ।
ज्ञानवापीतटे रम्ये तपः कृत्वा यथाविधि ॥ 81

गमिष्ये यत्र कुत्रापि शिवेन प्रेरितस्ततः ।
त्यक्तेदानीमियं काशी दुःखं दास्यत्यसंशयम् ॥ 82

अनन्तजन्मतपसा सम्प्राप्ता शिवरूपिणी ।
इत्युक्त्वा तदनु प्रीत्या ज्ञानवापीतटे शुभे ॥ 83

साग्रं युगायुतं चक्रे विष्णुर्घोरतरं तपः ।
तं दृष्ट्वा मुनयः सर्वे तपोनिष्ठं जितेन्द्रियम् ॥ 84

तपोनिधिरिति प्रीत्या नाम चक्रुरकल्मषाः ।
ततस्त्यक्त्वा तपो विष्णुरूरीकृत्य स्वकं वपुः ॥ 85

प्रज्वाल्य पावकान् सम्यगेकपादेन संस्थितः ।
पुनर्वीरेशनिकटे तपस्तप्तुं समारभेत् (प्रचक्रमे) ॥ 86

तपोनिष्ठं ततो भानुः प्रणिपत्य जनार्दनम् ।
उवाच वचनं चारु सन्नतांसः कृताञ्जलिः ॥ 87

**सूर्य उवाच** -

जनार्दन तपोनिष्ठ सर्वदा सर्वदेहिभिः ।
कः पूजनीयो यत्नेन को वा देवोत्तमः परः ।।

देवानां ब्राह्मणानां च को वा पूज्यो विशेषतः ।
सर्वदेवेषु विख्यातः सर्वदेवैश्च कः स्तुतः ।।

कः स्मर्तव्यो मुक्तिकामैः को वा जप्यो मनुस्सदा ।
एतत्सर्वं विशेषेण वक्तुमर्हसि सादरम् ।।

**विष्णुरुवाच** -

देवोत्तमो महादेवः पूजनीयः प्रयत्नतः ।
स एव सर्वदेवेशः स एव जगदीश्वरः ।।

न तस्मादधिको देवः स एवाखिलपुङ्गवः ।
वेदवेदान्तसंवेद्यः स एव श्रुतिसंस्तुतः ।।

स एव सर्वलोकानां मोक्षदो मुक्तिनायकः ।
स एव सर्वभावेन पूजनीयो द्विजामरैः ।।

जगदुत्पद्यते यस्मात्तस्मिन्नेव प्रलीयते ।
तस्यैश्वर्याण्यनन्तानि स एव परमेश्वरः ।।

शङ्करादधिको देवो नास्ति न श्रूयतेऽपि च ।
शङ्करः सर्वदेवानामधिकः शङ्करो ध्रुवम् ।।

पुनः पुनर्विचार्यैव वेदशास्त्राणि तत्वतः ।
शिव एव सदा पूज्य इति पूर्वं विनिश्चितम् ॥ 96

सत्यं सत्यं पुनः सत्यं सत्यमेवोच्यते मया ।
शिव एव सदा सेव्यः सेव्यः सेव्यो न संशयः ॥ 97

शिव एव सदा पूज्यः स्मर्तव्यः शिव एव हि ।
शिव एव सदा सेव्यो मुक्तिरूपफलेप्सुभिः ॥ 98

शिवान्यो मुक्तिदो नास्ति शिव एव ततो जनैः ।
सम्प्राप्यः सर्वभावेन यत्नैश्च विविधैर्वरैः ॥ 99

वेदैरपि शिवो ध्येयो न ज्ञातस्तत्वतोऽनघैः ।
स एव सर्वदा पूज्यो ध्येयः स्मर्तव्य एव च ॥ 100

शिवो धनं शिवो बन्धुः शिवस्त्राता शिवः पिता ।
शिवः प्रभुः शिवो दाता शिवान्नास्त्यधिकः परः ॥ 101

शिवलिङ्गं मया पूर्वमर्चितं बहुसाधनैः ।
इदानीमपि पश्येत(पश्यैतत्)लिङ्गं संपूज्यते मया ॥ 102

लिङ्गार्चनजपुण्येन काशी संप्राप्यते कथं (मया) ।
पिबेत्(?)(सर्वैः) सर्वार्थसिध्यर्थं सर्वपापौघशान्तये ॥ 103

लिङ्गपूजैव कर्तव्या मुमुक्षुभिरहर्निशम् ।
बहवो मोक्षमापन्नाः शिवलिङ्गस्य पूजया ॥ 104

देवैर्नरैश्च गन्धर्वैर्मुनिभिश्च मुमुक्षुभिः ।
अप्रमादेन कर्तव्या लिङ्गपूजैव सर्वथा ॥

"ऊर्ध्वाय नम" इत्यादि मन्त्रैर्लिङ्गस्य पूजनम् ।
कर्तव्यमनिशं विप्रैर्देवैश्च शिवतत्परैः ॥

शिवस्य सन्निधिर्लिङ्गे सर्वकालेषु सर्वदा ।
तिष्ठत्यतो लिङ्गपूजा कर्तव्या सततं बुधैः ॥

वेदोक्तलिङ्गपूजैव कर्तव्या सततं द्विजैः ।
वेदमार्गरतैः शुद्धैर्मोक्षरूपफलार्थिभिः ॥

शिवलिङ्गमनभ्यर्च्य यो भुङ्क्ते मोहसङ्गतः ।
स याति नरकं घोरं यावदाचन्द्रतारकम् ॥

आर्यावर्ते पुरा कश्चिद्ब्राह्मणो वेदवित्तमः ।
सर्वसौभाग्यसम्पन्नः सर्वशास्त्रविशारदः ॥

कलत्रपुत्रपौत्रादिसौख्यवृद्धिकरः सदा ।
नित्यं शिवार्चनरतः कृतज्ञः सर्वसम्मतः ॥

कदाचित्क्षुधितः श्रान्तो विस्मृत्य शिवपूजनम् ।
चकार भोजनं मत्तः प्रदोषे बलवद्बली ॥

ततः स दैवयोगेन पञ्चत्वमगमद् द्विजः ।
ततो यमभटैर्नीतः शूलैः सन्ताडितो भृशम् ॥

यमाग्रे सन्निवेश्यैवं पुनःसन्ताडितोऽभवत् ।
तानुवाच यमः प्रीत्या तदा कोऽयमिति स्फुटम् ।। 114

**यमदूता ऊचुः -**

यमायं ब्राह्मणः पूर्वं विहाय शिवपूजनम् ।
उवासैकदिनं मत्तः शङ्करस्मरणं विना ।। 115

अनेन भुक्तं मत्तेन श्रान्तेन क्षुधितेन च ।
शिवायानर्पितं दिव्यमन्नं स्वप्रियमादरात् ।। 116

कियत्पर्यन्तमेवास्य नरके वसतिर्मता ।
कीदृशे नरके योज्यो वद सर्वं विशेषतः ।। 117

शिवलिङ्गार्चनं नित्यं कृत्वाऽनेन स्थितं पुरा ।
कदाचिदेकदा त्यक्तं क्षुधितेन भृशं यम ।। 118

इति तद्वचनं श्रुत्वा विचार्य बहुधा यमः ।
धर्मशास्त्र(ा)विरोधेन वचःप्राह विचक्षणः ।। 119

पञ्चवत्सरपर्यन्तं तप्तशैले निरन्तरम् ।
तिष्ठत्वयं ततो भूमौ स्वयमेव पतिष्यति ।। 120

इति पूर्वं यमेनोक्तं तदा तदभवत्तदा(था) ।
ततो यत्नेन कर्तव्या लिङ्गपूजा निरन्तरम् ।। 121

स्नानं सन्ध्या लिङ्गपूजा होमं च(श्च) पितृतर्पणम् ।
स्वाध्याय श्चेति षड् विप्रैः कर्तव्या नियमेन हि ।। 122

नित्यत्वेनैव विधिना प्राप्तं तल्लिङ्गपूजनम् ।
तत्कदापि हि न त्याज्यं न त्याज्यं सर्वथा द्विजैः ।। 123

लिङ्गार्चनविहीनस्य समस्ता निष्फला क्रिया ।
ततः सर्वार्थसिध्यर्थं लिङ्गपूजा विधीयते ।। 124

नित्यकर्मसमृध्यर्थं नित्यत्वेन श्रुतं श्रुतैः ।
शिवलिङ्गार्चनं कार्यं यत्नेन प्रत्यहं द्विजैः ।। 125

शिवलिङ्गार्चनं नित्यं नित्यमध्ययनं तथा ।
ततः सर्वार्थसिध्यर्थं लिङ्गपूजा विधीयते ।। 126

विभूतिधारणं नित्यं नित्यं रुद्राक्षधारणम् ।
शिवलिङ्गार्चनं नित्यं कुर्वन्नपि कदाचन ।। 127

यदि त्यक्ष्यति मोहेन प्रत्यवैति न संशयः ।
सर्वेप्सितार्थदं नित्यं सुलभं लिङ्गपूजनम् ।। 128

त्यक्त्वा वृथा जनाः सर्वे नरके निपतन्त्यहो ।
लिङ्गपूजनमात्रेण बहवो मुनयः पुरा ।। 129

ययुः कैलासनिलयमयत्नेनैव दुर्लभम् ।
लिङ्गपूजापरं शैवं निरीक्ष्य यमकिङ्कराः ।। 130

दूरादेव पलायन्ते स्मरन्तो यमशासनम् ।
न लिङ्गपूजनादन्यन्निःश्रेयसकरं परम् ॥ 131

सत्यमेतत्सत्यमेतत्सत्यमेतन्न संशयः ।
इति तद्वचनं श्रुत्वा भानुः सन्तुष्टमानसः ॥ 132

लिङ्गार्चनपरो भूत्वा काश्यां न्यवसदादरात् ।
वीरेशनिकटे विष्णुरेकपादेन सादरम् ॥ 133

चकारोग्रं तपस्तीव्रं ज्वलपञ्चाग्निमध्यगः ।
अशीतियुगपर्यन्तं तपः कृत्वा पुनर्मुदा ॥ 134

इदानीं शिवगङ्गायां करोत्युग्रं तपोऽम्बिके ।
ब्रह्मादयोऽपि ते देवास्तेनैव सह सादरम् ॥ 135

तथैवोग्रं तपः कृत्वा तिष्ठत्यविकलं सदा ॥ 136

तज्ज्ञानवापीजलमादरेण
देवाः समस्ताः सततं वरेण्यम् ।
ज्ञानैकरूपं विमलं पतन्ति (पिबन्ति)
हृल्लिङ्गवृद्ध्यै शिवलिङ्गनिष्ठाः ॥ 137

॥ इति श्रीशिवरहस्ये सप्तमांशे शिवगौरी संवादे
काशीमाहात्म्ये ज्ञानवापीप्रशंसायां
विष्णुभानुसंवादो नाम
षष्ठोऽध्यायः ॥



## ।। सप्तमोऽध्यायः ।।

**श्रीपार्वत्युवाच -**

विश्वेश्वराखिलाराध्य सर्वज्ञ करुणानिधे ।
क्व मुक्तिमण्डपस्थानां तत्प्रमाणं कियन्मतम् ।।

मुक्तिमण्डपसंज्ञापि कथमस्याभवच्छुभा ।
एतत्सर्वं विशेषेण श्रेतुमिच्छामि शङ्कर ।।

**श्रीसदाशिव उवाच -**

अति कष्टमिदं पृष्टमिदानीं वरवर्णिनि ।
मुक्तिमण्डपमाहात्म्यं शृणु वक्ष्ये मनोहरम् ।।

यत्र ज्योतिर्मयं लिङ्गं मम विश्वेश्वराभिदं (धम्) ।
तत्रास्ति रत्नप्रसादःसर्वलोकमनोहरः ।।

तत्प्रसादप्रभासङ्गैर्दिशः प्रतिदिशास्तथा ।
अत्यूर्ध्वलोकास्सर्वेऽपि दीपिताः समलङ्कृताः ।।

प्रासादोऽपि सरत्नाढ्यो लिङ्गाकारो विराजते ।
तन्मूलमग्रभागो वा न केनापि च दृश्यते ।।

अनर्घ्यरत्नमालाभिः सर्वदालङ्कृताः शुभाः ।
मुक्तामालापरिवृतो मूलभागोऽस्य सर्वदा ।।

प्रासाददिव्यरत्नानि रात्रौ दीपा इवाम्बिके ।
तिष्ठन्त्यत्यन्तरम्याणि नेत्रोत्सवकराणि च ।। 8

कदाचिदप्यन्धकारसम्बन्धस्तत्त सर्वदा(था) ।
नास्त्येव रत्नदीपौघसम्बन्धेन वरानने ।। 9

सहस्ररत्नशृङ्गाणां राजते तत्र सर्वदा ।
लिङ्गाकाराणि शृङ्गाणि शुद्धान्यप्रतिमानि च ।, 10

तेजः पुञ्जमिवाभाति प्रासादः सर्वदा शुभे ।
रत्नपुञ्जमयः प्रीतिं सन्तनोति निरन्तरम् ।। 11

राशीकृतमहारत्नप्रभेयमिति धीःसदा ।
सर्वेषां भवतिस्पष्टं तत्प्रासादावलोकनात् ।। 12

विलाससदनं रम्यं मम तादृशमम्बिके ।
नान्यत्र दृश्यते भव्यं नित्योत्साहकरं परम् ।। 13

सहस्रकोटिगणपैरत्युग्रैरुद्यतायुधैः ।
वीरैः संरक्ष्यते नित्यं प्रासादो विमलो मम ।। 14

श्राव्यो दुन्दुभिनिर्ह्रादो जायते तत्र सर्वदा ।
गायन्ति गायका नित्यं शिवनामानि सादरम् ।। 15

नृत्यन्ति नर्तकाश्चात्र चित्रनृत्यविशारदाः ।
मन्दारपुष्पसञ्छन्नो रत्नतोरणसंवृतः ।। 16

नित्यानन्दकरो भव्यः सर्वमङ्गलसंश्रयः ।
दैवैराराधितो नित्यं ध्यातश्च सकलैः सुरैः ॥ 17

तत्प्रासादसमालोके प्रासादो नैव दृश्यते ।
सर्वेषां मुक्तिदो नित्यं दर्शनादेव सर्वथा ॥ 18

तत्र लिङ्गं ममास्त्येकं रम्यं विश्वेश्वराभिधम् ।
तत्प्रभावो न देवैश्च शक्यते ज्ञातुमम्बिके ॥ 19

तल्लिङ्गतत्वममलैर्वेदैरपि न निश्चितम् ।
तत्स्वरूपं कथं ज्ञेयं तदन्यैरल्पबुद्धिभिः ॥ 20

वेदैरपि यथाशक्ति तदेव प्रतिपाद्यते ।
तदेवोपास्यमखिलैस्तदेवाभीष्टदायकम् ॥ 21

तदनिर्देश्यममलमप्रमेयमनामयम् ।
निष्कलङ्कं निराकारं तदेव हि निरञ्जनम् ॥ 22

तदेव निधनेत्यादिमन्त्रवेद्यं यथात्मकम् ।
दर्शनादेव सर्वेषां मोक्षदं तत्सनातनम् ॥ 23

अनेककालमत्युग्रं तपः कुर्वन्ति सादरम् ।
विश्वेश्वराभिधं लिङ्गं द्रष्टुमेव मनीषिभिः ॥ 24

अनेककल्पपर्यन्तमुपविश्य मयापि वा ।
प्रभावस्तस्य लिङ्गस्य वक्तव्यः कथमम्बिके ॥ 25

कदाचिदपि तल्लिङ्गं न दृष्टं येन सर्वदा ।
न तस्य मुक्तिस्तत्सत्यं सत्यं सत्यं न संशयः ।। 26

यद्दर्शनार्थं मुनयः कुर्वन्ति बहुधा तपः ।
तद्धि वैश्वेश्वरं लिङ्गं द्रष्टव्यं बहुयत्नतः ।। 27

यन्नपश्यन्ति मुनयो यन्न पश्यन्ति देवताः ।
यन्न जानन्ति वेदाश्च तल्लिङ्गं प्रेक्ष्यमन्वहम् ।। 28

द्वित्राण्यतीव रम्याणि बिल्वपत्राणि सादरम् ।
येनार्पितानि तल्लिङ्गे तेन मुक्तिरवाप्यते ।। 29

अभिषिच्य विधानेन यो मां बिल्वदलैर्मुदा ।
पूजयिष्यति पुण्यात्मा स मोक्षमधिगच्छति ।। 30

मद्भक्तेन मयि प्रेम्णा पत्रं वा फलमेव वा ।
दत्तं स्वोपहृतं यत्तु तद्ग्रहिष्यामि सादरम् ।। 31

एकं बिल्वदलं रम्यं मद्भक्तेनार्पितं मयि ।
अनन्ताघहरं नूनं सत्यमेवोच्यते मया ।। 32

मद्भक्तोऽपि स विज्ञेयः सर्वभावेन सर्वदा ।
सर्वं विहाय मामेव भजते यः सदा मुदा ।। 33

विभूतिरुद्राक्षपरो लिङ्गमेवार्चयन्मुदा ।
मामेव शरणं प्राप्तो यःस एव मम प्रियः ।। 34

महापाशुपताः शुद्धामहाशैवाश्च सर्वदा ।
मामर्चयन्ति मामेव शरणं प्राप्नुवन्ति च ॥ 35

मद्भक्तवर्यैः सततं मदर्चनपरायणैः ।
अविमुक्तमिदं क्षेत्रमाश्रित्य स्थीयते मुदा ॥ 36

शैवैः पाशुपतैः शुद्धैर्मल्लिङ्गं पूज्यते सदा ।
तैरेव कृतपूजापि गृह्यते सादरं मया ॥ 37

पत्रं फलं वा पुष्पं वा जलं वा स्वार्जितं शुभम् ।
मद्भक्तेनार्पितं मह्यमनन्तायोपकल्पते ॥ 38

पत्रेणाप्यर्चितं लिङ्गं मोक्षदं सर्वदेहिनाम् ।
विश्वेश्वराभिधं तत्तु तत्प्रासादेऽधितिष्ठति ॥ 39

तत्प्रासादवरस्यैव दक्षिणादिशि भासुरम् ।
रम्यं मणिमयं स्थानमेकं तिष्ठति पापहम् ॥ 40

तत्सहस्रमणिस्तम्भैरुत्तमैरुन्नतैः शुभैः ।
रञ्जितं राजितैःश्रृङ्गैर्हेमश्रृङ्गैश्च राजितम् ॥ 41

क्वचित्स्फटिकश्रृङ्गौघैर्लिङ्गाकारैर्मनोहरैः ।
स्थानं तद्राजते देवि नेत्रोत्सवकरं सदा ॥ 42

तप्तालकाश्चतुष्षष्टिकोटि प्रथम नायकाः ।
उदायुधा महावीरा मम प्रियकराः सदा ॥ 43

तस्मिन्नेव महास्थाने शैवास्तप्तालकाज्ञया ।
उपविश्यातिसन्तुष्टास्तिष्ठन्ति शिवपूजकाः ।। 44

सादरं भस्मदिग्धाङ्गा रुद्राक्षाभरणप्रियाः ।
रुद्रसूक्तजपासक्तास्तिष्ठन्ति विमलाशयाः ।। 45

शैवं महामुनिं(मनुं) नित्यं सर्वपापौघशामकम् ।
जपन्तः सततं सन्तो वसन्त्यत्यन्तमादरात् ।। 46

शुद्धान्तः करणैस्तत्र जप्तःशैवैर्महामनुः ।
शैवो मोक्षप्रदो नूनं भवत्येव न संशयः ।। 47

एकदाप्यत्र शैवेन जप्यः शैवो मनुर्मुदा ।
अनन्तगुणितो नूनं पापदावाग्निशामकः ।। 48

शैवो मनुःस्वतः शुद्धः पापतूलादि नाशकः ।
सोऽप्यत्र जप्तः शैवेन्द्रै सर्वाभीष्टप्रदो ध्रुवम् ।। 49

शैव एव महामन्त्रो जप्यः पञ्चाक्षरः परः ।
शैवैर्मोक्षार्थिभिर्नित्यं मन्त्रवल्लिङ्गपूजकैः ।। 50

तन्मध्ये कर्णिकारा रत्नराजिविराजिता ।
अत्युन्नता वेदिकैका तिष्ठति प्रियदर्शना ।। 51

तन्मध्ये येक(चैक)काश्मीरमणिराजितमानसं(सनम्) ।
स्थितं तदुपरि स्पष्टमुपविष्टं मया पुरा ।। 52

तदानीमागता काचिदिन्दुबिम्बनिभानना ।
विशालपद्मपत्राभनयना नयनप्रिया ॥ 53

मन्दारमालाममलामम्लानां मधुपावृताम् ।
धृत्वा पद्माभहस्तेन क्षौमाम्बरविराजिता ॥ 54

सा मां दृष्ट्वानतग्रीवा प्रणम्य मुहुरादरात् ।
बिल्वैर्मन्दारपुष्पैश्च चक्रे पूजां यथाविधि ॥ 55

पूजयित्वा ततः सा मां कृताञ्जलिपुटा तदा ।
इदमेव वचः प्राह स्तोत्रैः स्तुत्वाह्यनेकधा ॥ 56

महेशदिव्यस्थानानि सन्ति काश्यामनेकधा ।
किमत्र रोचते नित्यं वसतिस्तव शङ्कर ॥ 57

विशेषःकोऽत्र देवेश सर्वस्थानविलक्षणः ।
किमस्ति तत्त्वमेतस्य वद सर्वं विशेषतः ॥ 58

पृष्टोऽहमेवं सुभगे तया तदनु सादरम् ।
उत्तरं दत्तवानस्मि तमे(दे)व शृणु सादरम् ॥ 59

काशीयं सर्वलोकेभ्यो मम प्रियकराऽनघे ।
तत्राप्यन्तर्गृहंनाम क्षेत्रं रुचिकरं मम ॥ 60

तन्मध्यगमिदं रम्यं स्थानं प्रियतरं मम ।
तत्तु लिङ्गमयं यस्मात्तत्रप्रीतिर्ममानघे ॥ 61

याथत्र वसतिर्नित्यं तथा नान्यत्र शोभने ।
अनिशं प्रीतिरत्रैव मम तिष्ठत्यनामये ।। 62

किञ्च काश्यां मृतान् सर्वान् शिवदेहान् शिवार्चकान् ।
शिवैकशरणानत्र समानीय ततः परम् ।। 63

एतत्सिह्मासने सम्यगुपविश्य यथा सुखम् ।
ममाङ्के विमले शुद्धे शैवं संवेश्य सादरम् ।। 64

शैवायात्यन्तशुद्धाय मुक्त्यर्थं तदनन्तरम् ।
शैवः पञ्चाक्षरो मन्त्रो मयाह्यत्रोपदिश्यते ।। 65

मुक्तिमण्डपसंज्ञास्य स्थानस्य श्रुतिसम्मता ।
यतो मया मनुःशैवो मोक्षायात्रैव दीयते ।। 66

अतःशैवो महामन्त्रो मुक्त्यर्थं शिवतत्परैः ।
जपनीयः प्रयत्नेन शैवैर्मुक्त्यर्थिभिः सदा ।। 67

अतिघोरतपः साध्यं काश्यां मरणमम्बिके ।
यतोऽत्र मरणादेव शैवैर्मोक्षोह्यवाप्यते ।। 68

पुरा कश्चिद् द्विजाधीशः शिवलिङ्गार्चन प्रियः ।
जन्मकोटिसहस्रेषु तपः कृत्वा हिमालये ।। 69

अतिश्रान्तः क्षुधाक्रान्तो जङ्गमं लिङ्गमर्चयन् ।
जगाम हिमवद्गेहं सर्वसौभाग्यसंयुतम् ।। 70

तदा तमागतं दृष्ट्वा हिमवान् शैलपुङ्गवः ।
अभ्युत्थाय यथाशास्त्रं पूजयामास सादरम् ॥ 71

प्रीतस्तदनु पूजान्ते हिमवन्तं नयान्वितम् ।
संवीक्ष्य वचनं चारु जगाद द्विजपुङ्गवः ॥ 72

हिमवन् सर्वशास्त्रज्ञ सर्ववेदाश्रयानघ ।
सर्वलक्षणसम्पन्न शिवभक्तवरामल ॥ 73

बहुकालं तपस्तप्तमत्रैव गिरिगह्वरे ।
लिङ्गपूजैव सततं कृता विधिवदादरात् ॥ 74

लिङ्गपूजाप्रभावेण जन्माद्यं यन्मया(मा)भवत् ।
तदाप्रभृति जन्मानि स्मर्यते(न्ते)नात्र संशयः ॥ 75

तत एव मया नित्यं क्रियते लिङ्गपूजनम् ।
पातकानि विचित्राणि विनष्टानि बहूनि मे ॥ 76

काशीप्राप्त्यर्थमुद्योगः क्रियते सर्वदा मुदा ।
जायन्ते बहवो विघ्नाः किं कर्तव्यमतः परम् ॥ 77

कुत्र कार्या तपश्चर्या कर्तव्यंकीदृशं तपः ।
को वा विघ्नहरो मन्त्रो वद सर्वं विशेषतः ॥ 78

हिमवानुवाच -

गौरीशृङ्गमिति ख्यातमेकशृङ्गं वरं मुने ।
तत्रास्त्येकं सरो रम्यं दिव्योदकविराजितम् ॥ 79

तत्तीरे विमलं लिङ्गमेकं गौर्या विनिर्मितम् ।
तत्र काश्मीरगणपः कश्चिद्गौर्या विनिर्मितः ॥ 80

तत्र गौर्यास्सरस्तीरे स्नानं कृत्वा विधानतः ।
लिङ्गं सम्पूज्य यत्नेन यथाशास्त्रं ततःपरम् ॥ 81

यथाशास्त्रं विधानेन काश्मीरगणनायकम् ।
पूजयस्वातियत्नेन गणानां त्वेति मन्त्रतः ॥ 82

तत्प्रीत्यर्थं तपश्चर्या तत्र कार्या निरन्तरम् ।
पञ्चाग्नि मध्य(ध्ये)पञ्चास्यपुत्रध्यानपुरःसरम् ॥ 83

गणानां त्वेति मन्त्रोऽयं सर्वविघ्न विनाशकः ।
जपनीयः प्रयत्नेन सर्वविघ्नोपशान्तये ॥ 84

इत्युक्तस्तदनुज्ञातः सन्तुष्टः शैवपुङ्गवः ।
मत्वाकृतार्थमात्मानं गौरीशृङ्गं जगाम च ॥ 85

तस्मिन्सरोवरे रम्ये स्नानार्थं विधिपूर्वकम् ।
गौरीलिङ्गमितिख्यातं तल्लिङ्गमतिशोभनम् ॥ 86

ततो विल्वदलैः शुद्धैस्तत्सरोविमलैर्जलैः ।
पूजयामास पूतात्मा गौरीलिङ्गमघापहम् ॥

ततो गणाधिपं सम्यगभिषिच्य यथाविधि ।
चकार पूजां विमलैर्बिल्वदूर्वाङ्कुरैरपि ॥

प्रणम्य बहुधा स्तुत्वा मनुं विघ्नहरं जपन् ।
पञ्चाग्निमध्ये संविश्य तपश्चक्रे दृढव्रतः ॥

शैवमुग्रतपोनिष्ठं विलोक्येन्द्रादयः सुराः ।
कम्पायमानास्तिष्ठन्ति कृताञ्जलिपुटः सदा ॥

एवमेव स शैवेन्द्रस्त्रिपञ्चाशद्युगावधि ।
चक्रारोग्रं तपः सम्यक् त्यक्ताहारो भृशं मुदा ॥

ततः प्रसादितस्तेन गणेशो विघ्ननाशकः ।
विघ्नान्धकारमार्ताण्डशुण्डदण्डविराजितः ॥

प्रसन्ने सति विघ्नेशे स्तुत्वा नत्वा मुहुर्मुहुः ।
ययाचे स वरं स्वेष्टं सर्वविघ्नौघनाशकम् ॥

गौरीसुत गणाधीश गजवक्त्र शिवप्रिय ।
विष्णुपूजितपादाब्ज प्रसीद वरदो भव ॥

गणेश सर्वविघ्नेश विघ्नान् संहर संहर ।
काशीप्राप्तिर्यथा भूयात्तथा कुरु ममानघ ॥

काशीप्राप्त्यर्थमुद्युक्तं यथा मां विघ्नराशयः ।
न बाधन्ते सदा सम्यक् तथा कुरु गणेश्वर ॥ 96

इति संप्रार्थितस्तेन विघ्नेशो विघ्ननाशकः ।
स प्रीतो वरदस्तस्मै ददौ वरमनुत्तमम् ॥ 97

ततस्तदाज्ञया शैवः सन्तुष्टः सम्प्रणम्य च ।
काशीं शिवपुरीं रम्यामाजगाम महामतिः ॥ 98

ततः काशीरक्षकांश्च सम्प्रसाद्य द्विजोत्तमः ।
स्नात्वा च शिवगङ्गायामाग्नीध्रेशं प्रणम्य च ॥ 99

वक्रतुण्डेशमभ्यर्च्य नत्वा श्रीकाल भैरवम् ।
वीरेशमभिवाद्यैव नत्वा पशुपतीश्वरम् ॥ 100

दण्डपाणिप्रसादेन ज्ञानवापीजलेऽमले ।
स्नात्वा ज्ञानेशमभ्यर्च्य नत्वा पञ्चविनायकान् ॥ 101

ढुण्ढिराजं समभ्यर्च्य सर्वविघ्नौघनाशकम् ।
ततो विवेश धर्मात्मा महाशैवाश्रयं सदा ॥ 102

इदमेव महत्स्थानं मुक्तिमण्टपसंज्ञकम् ।
यत्रोपदिश्यते मन्त्रः शैवानां मुक्तिकाङ्क्षिणाम् ॥ 103

अनन्यशरणानां तु मद्भक्तानामघापहम् ।
ततः प्रविश्यधर्मात्मा महाशैवाश्रयं सदा ॥ 104

मुक्तिमण्टपमत्यन्तसुखं प्राप्य द्विजोत्तमः ।
ततो ममान्तिकं प्राप्य चकाराभ्यर्चनं मुदा ॥

ममैव लिङ्गे विमले मुक्तिदे वेदसंस्तुते ।
ततः प्रणम्य बहुधा स्तुत्वा स्तोत्रैरनेकधा ॥

चकार नृत्यं बहुधा सादरं भक्तिपूर्वकम् ।
उपविश्य ततोऽत्रैव जप्त्वा मन्त्रं शिवात्मकम् ॥

ततोऽन्तर्गृहयात्रादि कृत्वा भक्तिपुरःसरम् ।
ज्ञानवापीतटे रम्ये निराहारो जितेन्द्रियः ॥

चकारोग्रं तपःसम्यङ्मुक्त्यर्थं शैवपुङ्गवः ।
शिवैकनिरतो नित्यं षट्सहस्रयुगावधि ॥

मन्त्राधिराजममलं जप्त्वा पापौघनाशनम् ।
ततः शरीरं विजहौ ज्ञानवापीतटे शुभे ॥

लिङ्गपूजां प्रकुर्वाणो वदन् शिव शिवेति च ।
ततो ममाङ्के संविश्य ममैवानुग्रहाद् द्विजः ॥

मन्त्राधिराजममलं जपन् पापौघनाशनम् ।
शैवं प्राप्यमहामन्त्रं मोक्षं संप्राप्य शोभते ॥

इत्युक्ता सा मनोरम्या मुक्तिमण्टपदेवता ।
ययौ स्व सदनं रम्यमम्बिके वरवर्णिनि ॥

ये मुक्तिमण्टपमनघ्यमनन्यलभ्यं
संप्राप्य शैवमनुमप्यतिपुण्यलभ्यम् ।
सम्पूजयन्ति शिवमेकमुपास्यमीशं
ते सर्वथा मुनिवराः शिवमाप्नुवन्ति ।। 114

।। इति श्रीशिवरहस्ये सप्तमांशे काशीमाहात्म्ये
मुक्तिमण्टपाख्यानकथनं नाम
सप्तमोऽध्यायः ।।



## ।। अष्टमोऽध्यायः ।।

**श्रीपार्वत्युवाच -**

शिवानन्दमयानन्त ज्ञानवापीतटे शुभे ।
केन पुण्यप्रभावेण दण्डपाणिः स्थिरं स्थितः ।। 1

पुराचीर्णं किमेतेन तपश्चर्या कथं कृता ।
कुत्र स्थितं पुराऽनेन तत्सर्वं वदशङ्कर ।। 2

**श्रीशिव उवाच -**

हरिकेशवनं नाम काश्यामेकं वरानने ।
शीघ्रसिद्धिकरं रम्यं विलासाश्रयमस्ति मे ।। 3

बिल्वमन्दारपुन्नाग पूगलोध्रद्रुमावृतम् ।
द्राक्षारसालरुद्राक्षकोविदार वनाश्रयम् ।।

खर्जूरनारिकेलाम्र करवीरैर्विराजितम् ।
जम्बीरहेमकदलीतालसालसमावृतम् ।।

आम्रातकार्जुनाश्वत्थकेतकीतरुसंवृतम् ।
नानाविधलताकीर्णं नानाद्रुम विराजितम् ।।

नानाविधलताकुञ्जमञ्जुलं नयनप्रियम् ।
वसन्तप्रमुखानेकै ऋतुभिः संश्रितं सदा ।।

नानाविधानेकपुष्पसङ्कुलं सर्वदा शुभम् ।
नानाविधफलाकीर्णं ध्वनि (घन)छायमघापहम् ।।

एतादृशे वने रम्ये हेमराजीविराजितम् ।
रत्नसोपान सम्बन्धं सरः समभवत्प्रिये ।।

चलद्विमल कल्लोलकुलसङ्कुलितं सदा ।
परागपूर्णं परितः सरः सुरवरार्चितम् ।।

तत्प्रान्तदेशेसरितं (देशं परितः)शैवाः शिवपरायणाः
भस्मोद्धूलितसर्वाङ्गास्त्रिपुण्ड्राङ्कितमस्तकाः ।।

रुद्राक्षमालाभरणाः शिवनामामृतोत्सुकाः ।
शिवैकदेवा विमलाः शिवाचाररताः सदा ।।

शिवैकशरणाः शुद्धाश्च पञ्चाक्षरपरायणाः ।
निष्कल्मषा निरातङ्का निवसन्ति शिवार्चकाः ॥ 13

शिवाराधनसंसक्ताः शैवशास्त्रविशारदाः ।
पञ्चाग्निमध्ये सततं काशीमरणकाङ्क्षया ॥ 14

तपः कुर्वन्ति सततमनन्ता विजितेन्द्रियाः ।
जीर्णपर्णाशिनाः केचित्केचिदम्बुकणाशनाः ॥ 15

केचिद्धुताशनाः केचिन्निराहाराः शिवप्रियाः ।
शुद्धान्तः करणाः शुद्धाः शिवतत्वैकचिन्तकाः ॥ 16

तत्रैव विमले स्थाने दण्डपाणिरयं शुभे ।
पञ्चवत्सरको बालस्तपश्चक्रे दृढव्रतः ॥ 17

पुरा हिमालये रम्ये नानाधातुविराजिते ।
तपस्तप्तमनेनैव महद्घोरतरं मुदा ॥ 18

स कोटियुगपर्यन्तं पञ्चाग्न्यन्तरगः सदा ।
रुद्राध्यायजपासक्तः शिवलिङ्गैकपूजकः ॥ 19

निमीलिताक्षो नियतो निःसङ्गः शिवचिन्तकः ।
एकेनैवाङ्घ्रिणा स्थित्वा चक्रे घोरतरं तपः ॥ 20

सर्वोत्तमं वेदवेद्यं सर्वाधारं जगत्प्रभुम् ।
ध्यायन्नेव महादेवं गौरीरमणमव्ययम् ॥ 21

तद्घोरतपसा भाता भूताः सर्वे दिवानिशम् ।
नत्वा कृताञ्जलिपुटास्तिष्ठन्तिनतकन्धराः ।

लिङ्गपूजारतं दृष्ट्वा तरवः पुष्पसङ्कुलाः ।
कम्पितास्तरवः सर्वे स्वतएव नमन्ति ते ॥

प्रज्वलन्त्यग्नयो नित्यं स्वतः कमललोचने ।
तपः प्रभावभीतास्ते ज्वलिता इव सर्वदा ॥

एवं बहुविधं घोरं तपः कृत्वा स्थितं मुदा ।
लिङ्गार्चन रतेनेत्थं बालकेनैव तेन हि ॥

ततः कदाचिन्नन्दीशमारुह्य वरवर्णिनि ।
मया गतं ततस्तेन मह्यं पूजा कृता शुभा ॥

बहुधाचकृतं स्तोत्रं कृताश्च नतयो मुदा ।
वरोऽपि याचितस्तेन शिवे भक्तिर्दृढास्त्विति ॥

दत्तो वरो मया तस्मै सततं सादरं पुनः ।
तपश्चकार विमलो मौनव्रतपरायणः ॥

बहुकालं ततस्तप्तं तपः परमपि प्रिये ।
ततः पुनर्मया तत्र गतं तेनार्चितं प्रिये ॥

तदा मया स पृष्टोऽभूत्तपस्वी विजितेन्द्रियः ।
शिवैकशरणः शुद्धः पञ्चाक्षरपरायणः ॥

तपो घोरतरं नित्यं किमर्थं क्रियते त्वया ।
किं तवाभीप्सितं तद्धि दास्ये वृणु वरं परम् ॥ 31

इति पृष्टस्ततः सोऽपि वव्रे वरमनुत्तमम् ।
काशीप्राप्तिर्मम श्रीमन्नास्तीति प्रीतमानसः ॥ 32

श्रुत्वा तदुक्तं वचनं विविच्य च पुनः पुनः ।
वरो दत्तोमया देवि तत्सन्तोषार्थमुत्तमम् ॥ 33

इतो जन्म सहस्रान्ते काशी संप्राप्यते त्वया ।
एवमेव महद्घोरं करिष्यति(सि) तपो यदि ॥ 34

ततः काश्यां स्वधर्मेण स्थित्वा नियतमानसः ।
तत्र घोरतरं भूयः करिष्यति(सि) तपोऽनघ ॥ 35

इति दत्तो वरस्तस्मै तदनु प्रतिजन्मनि ।
जातिस्मरं(:) तपो घोरं भूयो भूयश्चकार सः ॥ 36

ततः काशीमां प्राप्य तपश्चक्रे स बालकः ।
विघ्नैः संविघ्नितोऽप्यत्र भक्त्या भृशमनुत्तमम् ॥ 37

तेनैव लज्जिताः सर्वे मुनयो ब्रह्मवादिनः ।
आश्चर्यं मुनयश्चक्रुर्दृष्ट्वा बालकमुत्तमम् ॥ 38

दृढव्रतं शिवरतं निमीलितविलोचनम् ।
तं दृष्ट्वा मुनयः सर्वे प्रणमन्ति पुनः पुनः ॥ 39

अस्थिमात्रावशिष्टाङ्गं लिङ्गाभ्यर्चनतत्परम् ।
दृष्ट्वैव भूताः सर्वेऽपि नमन्त्यनुदिनं मुहुः ।। 40

कृताञ्जलिपुटा देवा निवसन्ति प्रणम्यतम् ।
सिद्धगन्धर्व यक्षाद्याः पूजयन्ति मुहुर्मुहुः ।। 41

विघ्नाननेकान् संहृत्य लिङ्गपूजनतत्परः ।
तपस्तीव्रतरं चक्रे हरिकेश वने शुभे । 42

एवं निवसतस्तस्य पुनः प्रीत्या गतं मया ।
ततः समागतं दृष्ट्वा मामस्तौषी स तु बालकः ।। 43

**दण्डपाणिरुवाच -**

विश्वेश प्रथ(मथा)मा धीश वृषभाधीश वाहन ।
वेदवेद्य जगन्नाथ नमस्ते रुद्रमन्यवे ।। 44

कालकूटहर श्रीमन् कालकाल कृपानिधे ।
श्रीनीलकण्ठ कामारे उतोतइषवे नमः ।। 45

त्रिशूलपाणिन् सर्वात्मन् दीनबन्धो दिगम्बर ।
सर्वाधार सुराधीश नमस्ते अस्तु धन्वने ।। 46

पिनाकपाणे देवेश सर्वदेवोत्तम प्रभो ।
अनादिनिधनानन्त बाहुभ्यामुतते नपः ।। 47

निरञ्जन निराधार निरवद्य निरामय ।
निष्कलङ्क निरातङ्क नमः सोमाय ते सदा ॥ 48

वेदान्त वेद्य त्रिदशैकबन्धो
त्रिकाग्निकाल त्रिपुरान्तकेश ।
अनन्तकल्याणगुणार्णवाद्य
रुद्राय देवाय नमोऽस्तु तुभ्यम् ॥ 49

अणोरणीयान् महतोमहीयान्
त्वमेव मान्यो जगदेकहेतो ।
विश्वाधिकाशास्य परात्परेश
ताम्राय देवाय नमो नमस्ते ॥ 50

त्वत्तो जगज्जन्म भवत्यनन्त
त्वत्तो जगद्रक्षणमिन्दु मौले ।
त्वय्येव नाशं समुपैति लोकः
शङ्गाय देवाय नमो नमस्ते ॥ 51

त्वमेव यज्ञादि फलप्रदाता
त्वमेव शैवोत्तम धर्मगोप्ता ।
त्वमेव नानाविध सृष्टिकर्ता
उग्राय देवाय नमो नमस्ते ॥ 52

त्वत्तो न किञ्चित्(कश्चित्)परम स्त्रिलोके
त्वामेव वेदोत्तममामनन्ति ।
त्वामेव शान्तं शरणं प्रपद्ये
भीमाय देवाय नमो नमस्ते ॥

त्वमेव मौनीन्द्रमनस्सरोज-
धर्मं प्रविष्टः शिपिविष्ट शम्भो ।
त्वमेव पूर्णः पुरुषः पुराणो
मयोभवाय प्रणतोऽस्मि नित्यम् ॥

त्वामनन्तमनाद्यन्तमामनन्ति महर्षयः ।
त्वमेव कर्मफलः शङ्कराय नमोऽस्तु ते ॥

त्वमेव भक्तमन्दारो बृन्दारक वरप्रदः ।
त्वमेवाभीष्टदो नित्यं महादेवाय ते नमः ॥

त्वामेवानन्तमीशानं त्वामेव जगदीश्वरम् ।
वदन्ति निगमाः सर्वे महेशातो नतोऽस्म्यहम् ॥

यादृशं त्वं (शस्त्वं) महादेव न जाने तत्वतः शिव ।
वेदैरपि न ते रूपं ज्ञान(त) मीशानतोऽस्मि ते ॥

त्वदन्यं न भजामीश त्वदन्यं(न्न)नश्शृणोम्ययम् ।
त्वदन्यं न स्मरामीश त्वदन्यं न भजाम्यहम् ॥

न शिवान्यं पूजयामि शिवान्यःपूज्य एव न ।
न शिवान्यं पूजयामि शिवान्यश्चिन्त्य एव न । 60

कर्मणा मनसा वाचा त्वामेव शरणं गतः ।
भृत्यत्वेन महादेव मामङ्गीकुरु शङ्कर ।। 61

पूतोऽस्मि पुण्यदेहोऽस्मि धन्योऽस्मि परमेश्वर ।
यतस्त्वत्पादकमलं दृष्टमद्य मया शिव ।। 62

तपः फलितमद्यैव पुराकृतमहर्निशम् ।
यतस्त्वत्पादकमलं .... .... ।। 63

सा लिङ्गपूजा फलिता या कृता पूर्वमादरात् ।
यतस्त्वत्पाद .... .... ।। 64

धन्या ममाभवन्माता पिता धन्योऽभवन्मम ।
यतस्त्वत्पाद .... .... ।। 65

धन्या मद्वंशजाः सर्वे धन्यं मत्कुलमुत्तमम् ।
यतस्त्वत्पाद .... .... ।। 66

जप्तः पञ्चाक्षरः शुद्धः फलितः श्रुतिसम्मतः ।
यतस्त्वत्पाद .... .... ।। 67

पूर्वार्जितानि पुण्यानि फलितानि सदाशिव ।
यतस्त्वत्पाद .... .... ।। 68

तत्तत्कालकृताः सर्वे धर्माश्च फलिताः शुभाः ।
यतस्त्वत्पाद .... .... ॥ 69

प्रायशो वह्नयः प्रीता यथाकालं हुता मया ।
यतस्त्वत्पाद .... .... ॥ 70

ऋषयः पितरः साध्याः प्रीताः प्रायोऽधुना विभो ।
यतस्त्वत्पाद .... .... ॥ 71

नान्तोऽस्ति मम भाग्यस्य भाग्यमीदृङ् न कस्यचित् ।
यतस्त्वत्पादकमलं .... .... ॥ 72

भाग्यस्य परिपाकोऽयं जात एव हितार्थदः ।
यतस्त्वपादकमलं दृष्टमेव मया शिव ॥ 73

स्तुन्वैवं बहुधा बालः प्रणम्य च मुहुर्मुहुः ।
कृताञ्जलिपुटो भूत्वा तस्थौ सन्तुष्टमानसः ॥ 74

तस्यास्थिमात्रावशिष्टमङ्गं स्पृष्टं मया ततः ।
गाणापत्यमपि प्रीत्या दत्तं तस्मै मनोरमे ॥ 75

ज्ञानवापीरक्षणार्थं तत्तटे स्थापितो मया ।
वरोऽन्योऽपि मया दत्तः सन्तुष्टेन ततः परम् ॥ 76

त्वत्कृतं स्तोत्रममलं यः पठेत्सततं शुचिः ।
काशीवासोऽनिशं तस्य भवतीति वरानने ॥ 77

तदाप्रभृति तत्तीरे दण्डं काञ्चनमुद्वहन् ।
तिष्ठत्यत्यन्तन्सतुष्टः पूर्णभद्रसुतः शिशुः ॥ 78

तेनैव ताड्यते लोकः शिवद्वेषकरः सदा ।
ब्रह्मादयोऽपि तं पूर्वमर्चयन्त्यधुना शुभे ॥ 79

काशीवियोगं तनुते स एव कुपितः सदा ।
मुनीनां मानवानां च देवानामपि शिक्षकः ॥ 80

दण्डपाणिकृपा यस्मिन् न भविष्यति सर्वथा ।
स विहाय तदा काशीं याति देशान्तरं प्रति ॥ 81

पूजनीयः प्रयत्नेन दण्डपाणिर्मम प्रियः ।
काशीवासरतैर्नित्यमप्रमत्तैर्यथोचितम् ॥ 82

दण्डपाणिप्रसादेन स्नानं भवति धीमताम् ।
ज्ञानवापीजले रम्ये सर्वपापापनोदने ॥ 83

शिवप्रियो दण्डपाणिः पूर्णभद्रसुतोऽनघः ।
यक्षेशः करुणासिन्धुर्धूतपापो गणेश्वरः ॥ 84

एतन्नामाष्टकेनैव प्रत्यहं शिवतत्परैः ।
पूजनीयः प्रयत्नेन काशीवासिभिरादरात् ॥ 85

दण्डपाणिप्रसादार्थं काशीवासरतैर्नरैः ।
भोजनीयस्त्रयोदश्यां शैवः क्षीरादिसाधनैः ॥ 86

नमन्ति मुनयस्सर्वे पूजयन्ति च तं द्विजाः ।
तस्यैवानुग्रहात्सर्वे काश्यां तिष्ठन्त्यनाकुलाः ।। 87

अयं यक्षकुलोत्पन्नो बालोऽपि मदनुग्रहात् ।
सामर्थ्यमीदृशं प्राप्य तिष्ठत्यतिबलान्वितः ।। 88

पूर्वपूर्वभवेष्वेवमनेनोग्रं तपः कृतम् ।
मामुद्दिश्यानिशं सम्यक्तत्फलं जातमीदृशम् ।। 89

यः कश्चिदस्ति सुभगे मद्भक्तो मत्परायणः ।
स सर्ववन्द्यः श्रेष्ठश्च भविष्यति न संशयः ।। 90

इदं मत्वैव मुनयो देवा यक्षा नरोत्तमाः ।
लिङ्गरूपिणमेकं मामर्चयन्ति दृढव्रताः ।। 91

धृतत्रिपुण्ड्रा जितमानसार्था
मनुष्यदेवर्षिचरा निरीहाः ।
मामेकमीशं शरणं प्रपन्ना-
स्तिष्ठन्ति लिङ्गार्चनसक्तचित्ताः ।। 92

।। इति श्रीशिवरहस्ये सप्तमांशे काशीमाहात्म्ये
दण्डपाणीतिहासकथनं नाम
अष्टमोऽध्यायः ।।



# ।। नवमोऽध्यायः ।।

**श्रीशिव उवाच -**

कथामन्यां प्रवक्ष्येऽहं श्रोत्रानन्दकरां पराम् ।
शृणु यत्नेन विमलामम्बिके पापहारिणीम् ।। 1

पुरा कश्चिद्द्विजाधीशः पूर्वजन्मतपोबलात् ।
काशीं सम्प्राप्य मामर्च्यमभ्यर्च्य विधिपूर्वकम् ।। 2

उषित्वैकं दिनं दीनः क्षुधार्तोऽस्तं गते रवौ ।
वीरेश्वरालये रम्ये निद्रां कर्तुं समाययौ ।। 3

गत्वा तत्र मनोरम्ये रत्नस्तम्भविराजिते ।
नानामणिगणाकीर्णं ददर्श शिवमन्दिरम् ।। 4

तत्र शैववरो दृष्टः कश्चिल्लिङ्गार्चनप्रियः ।
भस्मरुद्राक्षदिग्धाङ्गस्तेनैव वरवर्णिनि ।। 5

तं प्रणम्य महाशैवं कृताञ्जलिपुटो द्विजः ।
उवाच वचनं चारु हृद्यं शैवजनप्रियम् । 6

**ब्राह्मण उवाच -**

विप्र शैववर श्रीमन् काशीवासरतानघ ।
काशीप्रभावः को वास्यां देवः पूज्योऽस्ति कः प्रभुः ।। 7

किमेतल्लिङ्गमाहात्म्यं किन्नामास्येश्वरस्य च ।
इदमेतन्मया पृष्टं विचार्य वद सादरम् ।।

**शैवद्विज उवाच -**

इन्दीवरेश्वरं नाम लिङ्गं मङ्गलदायकम् ।
विश्वेश्वरात्मभूतं च सर्वपापभयापहम् ।।

पुरात्र विष्णुना घोरं तपस्तप्तमनेकधा ।
आब्रह्मकल्पमेकाङ्घ्रिस्थितः पञ्चाग्निमध्यगः ।।

कुण्डमस्त्येकममलमत्र रम्यजलावृतम् ।
तज्जलस्नानमात्रेण नरो याति परां गतिम् ।।

पुरा द्विजाधमः कश्चिदस्मिन् कुण्डे मनोहरे ।
स्नानं कृत्वा महालिङ्गमिदं दृष्ट्वा प्रणम्य च ।।

काशीं त्यक्त्वा स्वदेशाय ययौ स तदनन्तरम् ।
स्वदेशे ब्रह्महत्यादिपातकानि चकार च ।।

ततः कदाचित्सर्पेण दष्टो भूमौ पतन् द्विजः ।
काशीविश्वेश्वरेत्येवं वदन् प्राणान् मुमोच सः ।।

ततो यमभटाः क्रूरा बध्वा निन्युर्यमान्तिकम् ।
तं दृष्ट्वा शमनः क्रूरश्चित्रगुप्तमुवाच च ।।

**यम उवाच -**

अनेन किं कृतं पुण्यं दुष्कृतं वा विचारय ।
कृतपापानुरोधेन दण्डनीयः प्रयत्नतः ।। 16

इति तद्वचनं श्रुत्वा चित्रगुप्तो विचक्षणः ।
पूर्वं तत्कृतपापानि जगाद शमनं प्रति ।। 17

ततो वीरेशकुण्डस्य स्नानं वीरेशदर्शनम् ।
वीरेश(विश्वेश)काशीस्मरणं जगाद मृतिकालिकम् ।। 18

वीरेशदर्शनादीनि स्मृत्वा कालस्ततः परम् ।
प्रदक्षिणीकृत्य विप्रं दण्डवत्प्रणिपत्य च ।। 19

अमूल्यरत्नखचितस्वासने विमले शुभे ।
उपवेश्यार्घ्यपाद्याद्यैरर्चयामास सादरम् ।। 20

ततो यमसभासद्भिरर्चितः सकलैरपि ।
पूजितो यमभृत्यैश्च चित्रगुप्तेन चार्चितः ।। 21

इन्द्रलोकं ययौ तत्र देवेन्द्रेणापि पूजितः ।
ततो विमानमारुह्य ब्रह्मलोकं जगाम सः ।। 22

तमागतं समालोक्य ब्रह्मा तत्वविदां वरः ।
स सभायां समुत्थाय दण्डवत्प्रणिपत्य च ।। 23

स्फुरद्रत्नासने रम्ये भक्तिश्रद्धासमन्वितः ।
उपवेश्य द्विजं सम्यगर्चयामास सादरम् ॥

ततो ब्रह्मसभासद्भिर्विनीतैर्नतकन्धरैः।
पृष्टः कोऽयमिति प्रीत्या बभाषे स वचस्तदा ॥

**ब्रह्मोवाच -**

अनेन काशी दृष्टास्ति विश्वेशः पूजितः पुरा ।
स्नानं वीरेशकुण्डेऽपि वीरेशो वीक्षितो मुदा ॥

अन्तकाले स्मृता काशी वीरेशोऽपि स्मृतः पुरा ।
यमेन पूजितः सम्यगिन्द्रेण च मयाप्ययम् ॥

अशीतियुगपर्यन्तं देवमानेन सर्वदा ।
पूजितोऽत्र मया सम्यक् प्रत्यहं निवसिष्यति ॥

ततः परमयं विप्रो भूमाववतरिष्यति ।
वेदशास्त्राण्यधीत्यैव महदैश्वर्यसंयुतः ॥

तत्वज्ञानं परं प्राप्य ततः काशीं गमिष्यति ।
काश्यां न्यायार्जितैर्वित्तैस्तर्पयित्वा सुरान्द्विजान् ॥

ततः सर्वं परित्यज्य निराहारो जितेन्द्रियः ।
पञ्चाग्निमध्ये नियतं लिङ्गपूजापरायणः ॥

एकेनैवाङ्घ्रिणा स्थित्वा मौनेन नियमी व्रती ।
षट्कोटियुगपर्यन्तं तपश्चर्यां करिष्यति ॥ 32

ततः शिवप्रसादेन शिवाङ्कमधिरुह्य च ।
शैवं पञ्चाक्षरं लब्ध्वा शुद्धो मुक्तिं भजिष्यति ॥ 33

इति तद्वचनं श्रुत्वा सर्वे ब्रह्मसभासदः ।
तस्मै प्रणम्य विधिवत्पूजां चक्रुर्यथोचितम् ॥ 34

तदन्यापि कथा तेन तदैवोक्ता मुदावहा ।
अत्याश्चर्यकरा श्राव्या पृष्टस्तैरेव तान्प्रति ॥ 35

**ब्रह्मोवाच -**

वीरेश्वरे पुरा कश्चिच्छैवः शिवजनप्रियः ।
लिङ्गार्चनरतो नित्यं शान्तो विजितमानसः ॥ 36

पञ्चाग्निमध्यसंविष्टः पञ्चाक्षरपरायणः ।
पञ्चीकृतात्मा पञ्चात्मा बभूव विजितेन्द्रियः ॥ 37

तस्यैव निकटे कश्चिन्मयूरच्छत्रसंज्ञकः ।
वीरेशकुण्डपानीयं पीत्वा पीयूषसन्निभम् ॥ 38

दोर्घपिञ्छाग्रभागेन देवालयरजःकणान् ।
दूरीकुर्वन् वीक्षमाणो न्यवसत्प्रतिवासरम् ॥ 39

ततः कदाचित्तत्रैव भिल्लिःकश्चित्समागतः ।
तं दृष्ट्वा स मयूरोऽपि भीतो दूरं गतो रुदन् । 40

किं कर्तव्यमयं दुष्टः प्राणग्राही समागतः ।
किं कर्तव्यं क्व गन्तव्यं हा काशी त्यज्यते मया ।। 41

प्राणात्ययेऽपि काशीयं न त्याज्या सर्वथा जनैः ।
तादृशीयं मया काशी त्यज्यते किं करोम्यहम् ।। 42

अनेकजन्मतपसा लब्धा काशी शिवात्मिका ।
या सेयं दुरदृष्टेन त्यज्यते किं करोम्यहम् ।। 43

काशी मुक्तिप्रदा रम्या सर्वपापप्रणाशिनी ।
त्यज्यते दुरदृष्टेन किं करोमि क्व याम्यहम् ।। 44

काशी पुण्यैकनिलया सर्वार्तिभयनाशिनी ।
पापौधपरिपाकेन त्यज्यते किं करोम्यहम् ।। 45

अहो यद्यपि काशीयं न त्याज्या मुक्तिकाङ्क्षिभिः ।
त्यज्यते सेयमेवाद्य महापातकिना मया ।। 46

कानि पापानि दुष्टानि कृतानि बहुधा मया ।
विश्वेशनगरी काशी त्यज्यते किं करोम्यहम् ।। 47

अपराधः कृतः को वा मया काशी वियोगजः (कृत्) ।
आनन्दवनदेशेन वियोगो जायते मम ।। 48

श्रीकालभैरवस्याद्य कोपो जातो भविष्यति ।
कदाचिन्न कृतं प्रायो दण्डपाण्यर्चनं मया ॥ 49

नो चेत्काशीवियोगोऽद्य कथं वा जायते मम ।
नोचेत्कथं वियोगः स्यात् वीरेशेन मयाधुना ॥ 50

हा काशीश महादेव कृपां कुरु कृपानिधे ।
रुद्रावासवियोगोऽद्य मया सोढुं न शक्यते ॥ 51

भक्तवत्सल विश्वेश विश्ववन्द्यजगत्प्रभौ ।
काशीवियोगजं दुःखं निवारय निवारय ॥ 52

हा वीरेश कृपासिन्धो हा भक्तजनवत्सल ।
ममापराधाः क्षन्तव्याः देहि काश्यां सदा स्थितिम् ॥ 53

अपराधिषु भक्तेषु क्षमा युक्तां महात्मनाम् ।
इदं विचार्य वीरेश काशीवासं प्रयच्छ मे ॥ 54

मनोवाक्कायजन्मानि पातकानि क्षमस्व मे ।
प्रयच्छ वासं गौरीश नित्यमानन्दकानने ॥ 55

शिवेति नामदावाग्निः करोत्यघवनक्षयम् ।
क्व पातकं ममास्तीश काशीवासं प्रयच्छ मे ॥ 56

अन्नपूर्णे कृपापूर्णे तूर्णं पूर्णेन्दुसुप्रभे ।
काशीनिवासभिक्षान्नं (क्षां मे)देहि देहि शिवप्रिये ॥ 57

इति प्रलपमानं तं मयूरं शुष्कतालुकम् ।
विलोक्य करुणासिन्धुः वीरे(धुर्वी)शो भक्तवत्सलः ।। 58

शैववर्येषु पश्यत्सु शूलपाणिरुदङ्मुखः ।
श्राव्यमार्तिहरं वाक्यं मुवाचाहूय तं द्विजम् ।। 59

**श्रीविश्वेश्वर (वीरेश्वर) उवाच -**

रे रे मयूर मा रोदीर्मा रोदीर्भीतिमुत्सृज ।
अभयं तव दास्यामि दुःखं मा कुरु सर्वदा ।। 60

स्वजातिधर्ममाश्रित्य चापमारोपितं करे ।
धृत्वा तिष्ठति भिल्लोऽयं हिंसां नैव करिष्यति ।। 61

काश्यां धर्मार्थमायान्ति पुरुषाः पुण्यतत्पराः ।
नाधर्मार्थं च हिंसार्थं शोकदानार्थमेव च ।। 62

अतो दुःखं न कर्तव्यं मयूराधिप मा शुचः ।
सुखेन संवसात्रैव काश्यां धर्मेण सर्वदा ।। 63

काश्यां दुःखप्रदो मर्त्यो यस्य कस्यापि देहिनः ।
यात्येव नरकं घोरं यावदाचन्द्रतारकम् ।: 64

चराचराणि लिङ्गानि काश्यां तिष्ठन्त्यनेकधा ।
तेषु सर्वेषु पूजैव कर्तव्या विधिवज्जनैः ।। 65

तत्तथैव शरीराणि रम्याणि विमलानि च ।
चरलिङ्गानि दिव्यानि विज्ञेयानि महात्मना ॥ 66

किन्नरो मनुजो यक्षो गन्धर्वो वामरोऽपि वा ।
तत्तथैव शरीरेषु दुःखदो याति यातनाम् ॥ 67

शैवदुःखप्रदो मर्त्यो विष्ठायां जायते कृमिः ।
तेनोत्कृष्टं पुनर्जन्म नारं नावाप्यते ध्रुवम् ॥ 68

अरण्ये निर्जने देशे जलघासविवर्जिते ।
सूकरो जायते नूनं शैवदुःखकरः सुरः ॥ 69

अमेध्यभक्षणासक्तो नानाव्रणविदूषितः ।
रासभो जायते नूनं किन्नरः शैवदुःखदः ॥ 70

शैवदुःखकरो यक्षो शृगालो जायते वने ।
गन्धर्वो जायते गृध्रः शैवदुःखकरो ध्रुवम् ॥ 71

शैवदुःखकरो दुष्टः काश्यां दैवान्मृतो नरः ।
अघोरयातनां प्राप्य तिष्ठत्याचन्द्रतारकम् ॥ 72

शैवं शरीरममलं शिवालयमुदाहृतम् ।
तस्य दुःखप्रदानेन दुःखितोऽहं न संशयः ॥ 73

सर्वदेवोत्तमे नित्ये मयि दुःखप्रदो जनः ।
अघोरनरकं नित्यं दुःखितो निवसिष्यति ॥ 74

स एव धन्यः पुण्यात्मा स एव जगतां गुरुः ।
स एव देवपूज्यश्च यास्मिंस्तुष्टो भवाम्यहम् ।। 75

स एव यतनाभोक्ता स एव नरकालयः ।
स एव दुर्भगो भाव्यो यस्मिन्रुष्टो भवाम्यहम् ।। 76

मामन्यदेवसदृशं मनुते यदि मानवः ।
सोऽपि घोरतरे तीक्ष्णे नरके निवसिष्यति ।। 77

देवोत्तमोऽहमजरो निष्कलङ्को निरञ्जनः ।
न मत्तोऽभ्यधिको देवो न मया सदृशोऽपि वा ।। 78

मद्भक्तसदृशो लोके नास्ति नास्त्येव सर्वथा ।
मद्भक्त एव पुण्यात्मा धन्यो मद्भक्त एव हि ।। 79

मद्भक्ते पूजिते सम्यगहमेवास्मि पूजितः ।
मद्भक्तपूजनेनैव सन्तुष्टोऽस्म्यहमादरात् ।। 80

त्वया पूर्वभवे सम्यङ्मत्प्राप्त्यर्थं तपः कृतम् ।
तवैतज्जन्मविगमे मुक्तिरत्र भविष्यति ।। 81

तवाप्यव्याहता भक्तिर्मयि तिष्ठति सर्वदा ।
सुखेन संवसात्रैव भिल्लाद्भीतिर्न ते ध्रुवम् ।। 82

इति दत्वाऽभयं शम्भुः प्रीणयित्वा शिवर्चकान् ।
तत्रैवान्तर्दधे लिङ्गे श्रीमद्वश्वेश्वराभिधे ।। 81

ईदृशः करुणासिन्धुर्वीरेशो भक्तवत्सलः ।
तद्दर्शनं कृतं पूर्वमनेन द्विजजन्मना ॥ 84

इदं शरीरमेतस्य चरलिङ्गं न संशयः ।
शिवलिङ्गार्चको नित्यं पूर्वपूर्वभवेष्वयम् ॥ 85

भवद्भिरस्य शैवस्य पूजा कार्या विशेषतः ।
शिवः शैवार्चनादेव तुष्टो भवति सर्वथा ॥ 86

इत्युक्त्वा स पुनः स्रष्टा ससभासद्यथाविधि ।
शिवलिङ्गधिया तस्मै पूजां चक्रे मनोरमाम् ॥ 87

इन्दीवरेश्वरक्षेत्रमीदृशं सर्वकामदम् ।
शैवेन्द्रैःसर्वदा सेव्यं भुक्तिरूपफलार्थिभिः ॥ 88

त्वयाप्यत्रैव सततं स्थातव्यं शिवमन्दिरे ।
काशीत्यागो न कर्तव्यो मोक्षेच्छा यदि सर्वथा ॥ 89

कल्याणनिलया नित्यमन्नपूर्णा वरानना ।
मृष्टमन्नं यथेच्छं सा दास्यत्येव न संशयः ॥ 90

इति तद्वचनं श्रुत्वा ततः सन्तुष्टमानसः ।
उवास काश्यामनिशं स तपश्चरणे रतः ॥ 91

कालेन स मृतोऽत्रैव ज्ञानवापीतटे शुभः ।
तस्मै मुक्तिरियं दत्ता शैवमन्त्रोपदेशतः ॥ 92

वीरेश्वरस्थानमिदं मनोज्ञं
ज्ञानप्रदं शैवजनाभिसेव्यम् ।
ततो मयूरोऽपि विहाय दुःख-
मुवास वीरेशकृपाकटाक्षात् ।।

।। इति श्रीशिवरहस्ये सप्तमांशे काशीमाहात्म्ये
वीरेश्वरेतिहासकथनं नाम
नवमोऽध्यायः ।।



## ।। दशमोऽध्यायः ।।

**श्रीसदाशिव उवाच -**

अन्यामपूर्वामनघां कथां वक्ष्ये शुभप्रदाम् ।
यत्कथाश्रवणात्सद्यो मुच्यते कर्मबन्धनात् ।।

काश्यां पशुपतीशस्य स्थानमत्युत्तमं शुभे ।
नित्यं सन्निहितस्तत्र निवसाम्यहमादरात् ।।

महापाशुपतैस्तत्र वसतिः क्रियते सदा ।
शैवशास्त्रप्रणेतारः सन्ति तत्रैव कोटिशः ।।

भस्मदिग्धकराद्यङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः ।
रुद्राक्षमालाभरणाः दीर्घपिङ्गजटाधराः ॥ 4

अघोरमूर्तिमनिशं ध्यायन्ते मामजं शिवम् ।
अघोरमन्त्रविन्यासजपनिष्ठा निराकुलाः ॥ 5

निष्कलं निर्गुणं शान्तं शिवमक्षरमव्ययम् ।
तुरीयमनघं मत्वा भजन्ति शिवमेव माम् ॥ 6

त्यक्त्वा पशुपतीशस्य स्थानमन्यत्र सर्वदा ।
न गच्छन्त्येव नियताः शैवदीक्षापरायणाः ॥ 7

नित्यं शिवकथास्वेव सक्तान्तःकरणा मुदा ।
शिवनाम विहायान्यन्न वदन्त्येव सर्वदा ॥ 8

तत्र पाशुपतं नाम कुण्डमस्ति वरानने ।
तत्काश्मीरमणिश्रेष्ठै रचितं निर्मलोदकम् ॥ 9

तत्र कुर्वन्ति ये स्नानं भूयस्ते सर्वदा शुभे ।
नारकीं यातनां प्राप्य न शोचन्ति कदाचन ॥ 10

तत्र स्नात्वा च पीत्वा च तज्जलं पापनाशकम् ।
सुधार्मिका मणिच्छायासमाक्रान्तमहर्निशम् ॥ 11

स्पृष्ट्वाऽपि यान्ति मल्लोकं निर्धूताघा न संशयः ।
पुनरावृत्तिरहितं सर्वाशास्यमनामयम् ॥ 12

तस्मिन्नेवाभवत्कुण्डे मण्डूकः कश्चिदुत्तमः ।
स शिवान्नान्यदस्तीति वदंस्तिष्ठति सर्वदा ॥ 13

स मण्डूकस्तु काकेन कदाचिद्दैवयोगतः ।
पञ्चक्रोशाद्बहिर्नीतः पातितश्च क्वचिद्गृहे ॥ 14

ततश्चुक्रोश बहुधा मण्डूकः शोककर्शितः ।
हाहा पशुपतीशेति वदन्नेवं मुहुर्मुहुः ॥ 15

धिक्च्छरीरमिदं काशीवियुक्तं(क्ता)जन्म धिङ् मम ।
धिग्जीवनमिदं धिग्धिक् शिवेत्येव वदन्मृतः ॥ 16

तं तथा मृतमालेक्य सुराः सन्तुष्टमानसाः ।
मन्दारकुसुमैः शुद्धैश्चक्रुर्वृष्टिं मनोहराम् ॥ 17

सभासद्भिः स देवेन्द्रो दुन्दुभिस्वनपूर्वकम् ।
ब्रह्मा समाययौ तत्र यमेनापि समन्वितः ॥ 18

तदा ममाज्ञां संप्राप्य शिवदूताश्च कोटिशः ।
ययुरत्यन्तसन्तुष्टा मण्डूकानयनोत्सुकाः ॥ 19

ततः शिव शिवेशेति महादेवेति वादिनः ।
तद्देशं प्रापुरमलाः कम्पयन्तो महीतलम् ॥ 20

ब्रह्मा ददर्श तान् शुद्धांस्त्रिपुण्ड्राङ्कितमस्तकान् ।
रुद्राक्षमालाभरणाञ्छिवनामजपोत्सुकान् ॥ 21

त्रिशूलतोमराद्यस्त्रसंयुतानग्निलोचनान् ।
व्याघ्रचर्मपरीधानान्नीलकण्ठानकल्मषान् ॥ 22

दृष्ट्वा भीतः कम्पमानः प्रणिपत्य पुनः पुनः ।
प्रत्येकं शिवभक्तानां चक्रे पूजां चतुर्मुखः ॥ 23

ततः कृताञ्जलिपुटो मधुरं मधुराक्षरम् ।
जगाद वचनं प्रीत्या विनीताननकन्धरः ॥ 24

कोमलानि शरीराणि भवतां शिवपूजकाः ।
श्रान्तानि क्वाद्य वेगेन गम्यते गमनोत्सुकाः ॥ 25

किमीदृशं महत्कार्यमन्यासाध्यमुपस्थितम् ।
मत्साध्यं चेदहं तत्र प्रेषणीयोऽस्मि सादरम् ॥ 26

विना भाग्येन भवतामाज्ञाकारित्वमस्य तु ।
कथं भावि महद्भाग्यं(य)फलमेतन्न संशयः ॥ 27

भवतां श्रान्तिनाशार्थं यज्ञःकार्यो मयाऽधुना ।
भवतां चेत्सुखं जातं तदा धन्योऽस्म्यसंशयम् ॥ 28

शिवभक्तशरीरं तु चरलिङ्गमतो मया ।
शिवतुष्ट्यर्थमत्रैव पूजा कार्या विशेषतः ॥ 29

शिवभक्तशरीराख्ये चरलिङ्गे सदाशिवः ।
नित्यं सन्निहितः साम्बो मोदते भक्तवत्सलः ॥ 30

ततः शैवशरीराख्ये लिङ्गे दत्तं धनं प्रियम् ।
गृह्णाति सादरं शम्भुर्भक्तदेहाश्रयः सदा ॥

धन्याः शैवजनाः सर्वे शिवनामैकजीवनाः ।
यत्पूजया महादेवस्तुष्टो भवति सानुगः ॥

शैवमुत्सृज्य ते य(योऽन्य)स्मिन्पूजनं चेत्करिष्यति ।
सा पूजा तत्कृतान्यत्र भस्मसाद्भवति ध्रुवम् ॥

प्रज्वलद्वह्निमुत्सृज्य यथाऽन्यत्र हुतं हविः ।
वृथा भवति सा पूजा तथाऽन्यत्र कृता वृथा ॥

पुरा कश्चिद्द्विजाधीशो हिमवद्देशसंस्थितः ।
सम्पाद्य बहुधा द्रव्यं नानाविधमनुत्तमम् ॥

पप्रच्छ ब्राह्मणाञ्छिष्टान्निर्लोभान्रागवर्जितान् ।
दानपात्रस्थलं कीदृग्वदन्त्विति धनार्जकः ॥

**ब्राह्मणा ऊचुः -**

शैवद्विजवरे दत्तं धनमल्पमपि प्रभो ।
प्रवर्तत(र्धते) न सन्देहो मेरुवत्तद्दिने दिने ॥

शैवं पात्रवरं त्यक्त्वा दत्तमन्यत्र तद्धनम् ।
प्रत्यहं रोदनं कृत्वा तत्र दुःखेन तिष्ठति ॥

शैवं कथं विहायान्यदत्तं पातकिना धनम् ।
इति दुःखं विहायैव ततो नश्यति तद्धनम् ।। 39

इत्युदीरितमाकर्ण्य सम्पूज्य द्विजपुङ्गवान् ।
बहुकालं तपस्तस्थौ(तेपे)शैवागमनकाङ्क्षया ।। 40

ततः शैवनराणां तु भवतां पूजनं मया ।
क्रियते पूजनं तत्तु स्वीकार्यं कृपया मयि ।। 41

इत्युक्त्वा स पुनः स्रष्टा तुष्टान्तःकरणस्तदा ।
मन्दारपुष्पमालाद्यैश्चक्रे पूजां यथाविधि ।। 42

विधाय पूजाममलां नताङ्गं विनयान्वितम् ।
विधातारं विलोक्यैते प्राहुर्वचनमादरात् ।। 43

शैवा ऊचुः -

महादेवे सदा भक्तिस्तवास्तु चतुरानन ।
श्रद्धया या कृता पूजा त्वया साध्वी कृता मुदा ।। 44

कार्यान्तरं न चास्माकमत्रैवागत मादरात् ।
मण्डूकोऽयं महानेष शैवः शङ्करसम्मतः ।। 45

काश्यां पशुपतीशस्य कुण्डे तत्र स्थितस्तदा ।
कदाचिद्दैवयोगेन काकेनात्र निपातितः ।। 46

एतदानयनार्थं तु शिवेन प्रेषिता वयम् ।
अस्मिन्विमाने संस्थाप्य नेयोऽयं शिवसम्मतः ॥ 47

इति तद्वचनं श्रुत्वा तुतोष चतुराननः ।
शिव एव सदापूज्यः कृपानिधिरिति प्रभुः ॥ 48

ततो विमाने विमले स्थापनीय इति प्रियात् ।
चक्रुर्मण्डूकदेहस्य स्पर्शं दूता मदर्चकाः ॥ 49

तदन्वैव स मण्डूकस्त्यक्त्वा निजतनुं मुदा ।
दिव्यं शरीरं सम्प्राप्तः शैवस्पर्शेन सादरं (कारणात्) ॥

तमादित्यप्रभं दृष्ट्वा सर्वे ब्रह्मादयः सुराः ।
सन्तोषं परमं जग्मुः पुष्पवृष्टिरभूत्तदा ॥ 51

दुन्दुभिध्वनिभिः पूर्णं सर्वं च पृथितीतलम् ।
रम्भाद्या ननृतुस्तत्र गन्धर्वाश्च जगुर्मुदा ॥ 52

सुगन्धाः शीतलाः शान्ता वायवश्च ववुस्तदा ।
दिशः प्रसन्नाः सम्भूता भूतास्तस्थुः सुखं तदा ॥ 53

ततस्ते कामगे भव्ये बिमाने पुण्यसङ्कुले ।
समारोप्य मुदा सर्वे तमेव चलिताः शुभे ॥ 54

यमः प्रचलितं दृष्ट्वा स्वलोकोपरि सम्भ्रमात् ।
चक्रे नानाविधां पूजां तस्मै सम्यग्यथाविधि ॥ 55

शिवदूतानपि प्रीत्या यथायोगं यथाक्रमम् ।
पूजयामास शमनो विधिं सेन्द्रं च सादरम् ॥ 56

पुष्पवृष्टिरभूत्तत्र पुनर्दिव्या मनोहरा ।
ततः सर्वे स्वर्गलोकं जग्मुरिन्द्रेण सादरम् ॥ 57

पूजयित्वा विमानस्थमासनाद्यैर्यथाविधि ।
शिवभक्तान् यथायोग्यं पूजयामास सादरम् ॥ 58

चतुर्मुखं च विमलं पूजयामास सादरम् ।
पुनस्तत्राप्यभूद्रम्या पुष्पवृष्टिर्वरानने ॥ 59

ततो जग्मुर्ब्रह्मलोकं ब्रह्मा तत्र पुनर्मुदा ।
चकार पूजां विमलां शैवेभ्यः सर्वथा विधिः ॥ 60

तत्र विश्राम्य सम्प्रीता ब्रह्मणा सह ते ततः ।
विष्णुलोकं ययुः सर्वे दिव्यं नेत्रमनोहरम् ॥ 61

विष्णुरालोक्य तान् सर्वान्दूतानुत्थाय सादरम् ।
कृताञ्जलिपुटो भूत्वा प्रणम्य च मुहुर्मुहुः ॥ 62

रत्नासनेषु शैवेन्द्रानुपवेश्य यथाविधि ।
चकार विविधां पूजां धन्योऽस्मीति वदन्मुहुः ॥ 63

विष्णुनापि कृतां पूजां स्वीकृत्य तदनन्तरम् ।
सर्वलोकवरं रम्यं कैलासमगमन्मुदा ॥ 64

त्रिषष्टिकोटिप्राकाररत्नछायाविभूषितम् ।
शतकोटीमनोरम्य रत्नद्वार समन्वितम् ।। 65

नानानर्घ्य मणिश्रेष्ठ गणरञ्जितमुत्तमम् ।
षष्ठा(?)र्बुदगणाधीश रक्षितं चित्रमुन्नतम् ।। 66

रत्नप्रासादनिकरैर्गोपुटाग्रैर्विराजितम् ।
विलास सदनं रम्यं ममापुस्तदनन्तरम् ।। 67

विमानादवतीर्याथ स शैवः सादरं मुदा ।
प्रणम्य बहुधा सम्यङ्मानन्तमजं विभुम् ।। 68

कृताञ्जलिपुटस्तस्थौ कम्पमानो नाननः ।
ततो दत्तं मया तस्मै गाणापत्यमनामयम् ।। 69

दुःखमात्रं विहायात्र संनिष्ठति यथासुखम् ।
इदं काशीनिवासस्य फलमीदृशमुत्तमम् ।। 70

इतोऽप्यन्ये शिवरताः कीटास्तत्कुण्डवासिनः ।
कालेन काश्यामनिशं वसन्तः शिवसम्मताः ।। 71

शैवं पदमवाप्यान्ते स्थास्यन्ति सुखिनः सदा ।
धर्मसम्पादितेनैव काशीवसेन सर्वदा ।। 72

काशी पाशुपतं क्षेत्रं महापाशुपताश्रयम् ।
सा पाशूपतवर्याणां मोक्षदा नात्रसंशयः ।। 73

शैवाः पाशुपताः शुद्धा यत्र तिष्ठन्ति सर्वदा ।
लिङ्गार्चनावृ(नव्र)ताधीशास्तत्रैव निवसाम्यहम् ॥ 74

मन्नाम जपसंसक्ता मल्लिङ्गार्चनतत्पराः ।
यत्रक्वचन तिष्ठन्ति तत्रसन्निहितोऽस्म्यहम् ॥ 75

शम्भो शङ्कर विश्वेशेत्यनिशं यत्र नृत्यति ।
शैवःशिवरतस्तत्र निवसामि वरानने ॥ 76

यत्र पाशुपता धर्माः शिवधर्माश्च सन्ततम् ।
वसन्ति तत्र सततं निवसाम्यहमादरात् ॥ 77

महापाशुपतं शैवं महाशैवं शिवप्रियम् ।
दृष्ट्वा पूजां यथाशक्ति कर्तव्या सर्वथा जनैः ॥ 78

शैवानपूजयित्वैव यो गच्छत्यभिमानतः ।
स याति नरकं घोरं सत्यमेवोच्यते मया ॥ 79

शिवदीक्षापरैः(रः)शैवः अशैवेभ्यः कदाचन ।
नमस्कारो न कर्तव्यो यतः शैवा जनोत्तमाः ॥ 80

शैवैरन्योन्यपूजा तु कर्तव्या विधिवत्सदा ।
अन्योन्यं पूजकाः पूज्यास्ते भवन्त्यनघाः शुभे ॥ 81

न काशीसदृशं क्षेत्रं न शङ्करसमः सुरः ।
न शैवसदृशो विप्रो न मत्तोऽन्योऽपि मोक्षदः ॥ 82

श्रीमत्पशुपतीशस्य सन्निधौ पत्रिणोऽपि माम् ।
ज्ञात्वा शिव शिवेत्येवं वदन्त्यनिशमादरात् ।। 83

धन्यं पाशुपतं स्थानं धन्याः पाशुपता जनाः ।
धन्याः पशुपतीशस्य पूजकाः सर्वदा मुदा ।। 84

यस्मिन्पाशुपतस्थाने वसतां पत्रिणामपि ।
शिवतत्वमतिः शुद्धा वर्तते बुद्धिदुर्लभा ।। 85

काश्यां पशुपतीशस्य सन्निधाने स्थितिः सदा ।
पूर्वोक्तधर्मनिरतैः कर्तव्या यत्नतः शुभे ।। 86

निराहारव्रतैः शुद्धैर्महाशैवैः शिवार्चकैः ।
स्थेयं पशुपतीशस्य क्षेत्रे यत्नेन सर्वदा ।। 87

तत्र जप्तो महामन्त्रः शैवैः शीघ्रफलप्रदः ।
भवत्येव न सन्देहो जपनीयः प्रयत्नतः ।। 88

शैवदीक्षां(क्षा) शुभां(भा)तत्र शैवेभ्यो दीयते मया ।
ततः पञ्चाक्षरो मन्त्रस्तत्र जप्यो निरन्तरम् ।। 89

पुरा कश्चिन्नृपश्रेष्ठः सर्वभूचक्रपालकः ।
सामन्तनृपवन्द्याङ्घ्रिर्बलवान् हिमवानिव ।। 90

अमितानेकवसुमान् कुबेर इव सर्वदा ।
धीरो मेरुरिव श्रीमान् श्रीबालेश इवानिशम् ।। 91

पितेव शास्ता लोकानां मातेवात्यन्तरक्षकः ।
कान्तेव हितकृन्नित्यं नवेन्दुरिव तोषकः ।। 92

स कदाचिद्रथारूढः सूर्यमण्डलसन्निभः ।
क्रीडारतोः ययौ भूपो यमलोकाय वीर्यवान् ।। 93

समायान्तं नृपं दृष्ट्वा तेजिष्ठमनलप्रभम् ।
भीतोऽभ्युत्थाय शमनो नृपं प्रत्युज्जगाम च ।। 94

ततः सिह्मासने रम्ये संवेश्य नृपमुत्तमम् ।
चकार पूजां विधिवदर्घ्यपाद्यादिभिः क्रमात् ।। 95

ततो यमकृतां पूजां गृहीत्वा नृपतिर्मुदा ।
रथमारुह्य वेगेन स्वर्गलोकं जगाम सः ।। 96

तमागतं नृपं दृष्ट्वा देवेन्द्रःसहसा मुदा ।
प्रणम्य विधिवत्पूजां चकार नियमान्वितः ।। 97

ततः स राजा प्रबलो देवेन्द्रादिभिरर्चितः ।
विमानवरमारुह्य ब्रह्मलोकं जगाम च ।। 98

ततः शतधृतिर्दृष्ट्वा तमेव नृपतिं मुदा ।
प्रणम्य पूजयामास पूजाविधिविशारदः ।। 99

ततः सभासदः सर्वे कृताञ्जलिपुटा विधिम् ।
कोऽयमित्यूचिरे मन्दं कम्पमाना नताननाः ।। 100

**ब्रह्मोवाच -**

शृण्वन्तु सावधानेन प्रभावोऽस्य मयोच्यते ।
तत्प्रभावस्य कथनाद्रोमाञ्चो जायते मम ॥

काश्यामन्तर्गृहे रम्ये शैवे पशुपतीश्वरः ।
शिवः पाशुपताराध्यस्तिष्ठत्यथ विनाशकः(?) ॥

तत्र कुण्डमभूद्दिव्यं तत्तीरे सुरसेविते ।
बिल्ववृक्षो महानासीन्नवपल्लवसंयुतः ॥

तन्मूले सर्वदा शैवाः शिवमन्त्रजपोत्सुका ।
शिवपूजापराः शुद्धास्तिष्ठन्ति विगतस्पृहाः ॥

शिवप्रियकरे रम्ये तस्मिन्नादित्यसोदरे ।
अयं तु शकुनिर्भूत्वा न्यवसन्नीडसंश्रयः ॥

तत्रायं निवसन्नित्यं स्वचञ्चुपुटसञ्चितैः ।
कोमलामलशाखाग्रबिल्वपत्रैः शिवप्रियैः ॥

तत्कुण्डोदकसम्प्लुष्टैरम्लानैरघनाशकैः ।
पूजयत्यतियत्नेन सम्यक्पशुपतीश्वरम् ॥

देवालयरजःपुञ्जान्दूरीकुर्वन्निरन्तरम् ।
आसायमति यत्नेन तिष्ठति प्रीतमानसः ॥

स्वपक्षधूननोद्धूतवायुभिश्चानिशं मुदा ।
तत्प्रान्तशैवस्वेदानि निवारयति सादरम् ॥ 109

एवमेष स्थितस्तत्र कदाचिदयमुद्धतः ।
चकार युद्धमन्येन विहङ्गेन बलान्वितः ॥ 110

युध्यमानेन तेनैव पञ्चक्रोशाद्बहिर्गतः ।
ततस्तत्र किरातेन केनचिन्निहतो मृतः ॥ 111

ततो यमभटैर्नीतः स एव शकुनिस्तदा ।
यमः कोऽयमिति प्रीत्या पप्रच्छ च स्वकिङ्करान् ॥ 112

**यमदूता ऊचुः -**

यमायं शकुनिर्भव्यः सदा बिल्ववनाश्रयः ।
काश्यां पशुपतीशस्य पूजकश्च विशेषतः ॥ 113

दैवादनेन काशी सा त्यक्ता मोक्षप्रदायिनी ।
किरातेन हतोऽन्यत्र दुष्टेन शरपाणिना ॥ 114

अयमस्माभिरानीतः काशीवासरतः सदा ।
पूजनीयोऽतियत्नेन शैवोऽयं शिवसम्मतः ॥ 115

इति तद्वचनं श्रुत्वा सादरं प्रणिपत्य च ।
पूजयामास शमनः सिह्मासनवरे स्थितम् ॥ 116

ततः स्वर्गं समासाद्य देवेन्द्रेणाभिपूजितः ।
मल्लोकमगमत्पूर्वं मयाऽयं पूजितः शुचिः ।। 117

ततो न्यवसदत्रैव युगानामयुतं मुदा ।
स्वत एव ततो गत्वा विचचारावनीतले ।। 118

ततः कश्चिद् द्विजाधीशः परन्तप इति श्रुतः ।
ददर्शैनमतिप्रेम्णा चन्द्रमब्धिरिव प्रियम् ।। 119

दृष्ट्वैव (तं)नृपति (तिः)सम्यक्पूजां कृत्वा यथाविधि ।
उवाचैनमतिप्रीत्या कृताञ्जलिपुटः सदा ।। 120

इष्टदेवो भवानेव शङ्करस्त्वं न संशयः ।
प्रसीद करुणासिन्धो भक्तार्तिभयनाशक ।। 121

शरीरं जीर्णमभवत्केशाश्च पलिता मम ।
पुत्रो न जातो राज्यस्य रक्षको नास्ति सर्वथा ।। 122

पितॄणां ऋणमस्त्येकमनिवार्यमनामयम् ।
तदृणापहृकर्माणि न दृश्यन्ते सुतं विना ।। 123

विवेकधर्मनिपुणो वेदशास्त्रार्थपारगः ।
यस्य नास्ति सुतस्तस्य व्यर्थं जन्म न संशयः ।। 124

पुन्नाम नरकं घोरमस्त्येकमतिदुःखदम् ।
पतितं तत्र मामन्यस्त्वं विना नोद्धरिष्यति ।। 125

वंशवृद्धिकरः पुत्रो यस्मिन्वंशे न जायते ।
तद्वंशनाशस्तीव्रेण भविष्यत्येव सर्वथा ।। 126

पुत्रहीनमिदं जन्म धिङ्ममापि जरावृतम् ।
धिक्पुत्राननुभूतं च राज्यमेतदकण्टकम् ।। 127

सर्वदुःखापहा काशी तिष्ठत्येव शिवात्मिका ।
तत्प्राप्तिसाधनं पूर्वं तप्तं च न मया तपः ।। 128

दुःखपीडितचित्तस्य मम दुःखनिवारकः ।
नास्त्येव सर्वथा लोके पुत्रान्यस्तोषकारणम् ।। 129

पुत्रदानं कुरुष्वाद्य यदन्यः पुत्रदः सुरः ।
नास्त्येव सर्वदा यस्माद्भुलवानसि (स्ति)महेश्वरः ।। 130

शिव एव हि धर्मार्थकाममोक्षप्रदः श्रुतः ।
तदन्यस्तत्प्रदो नेति(श्रुति) धृतिर्वदति शङ्कर ।। 131

इति तद्वचनं श्रुत्वा तमुवाचायमादरात् ।
खेदं मा कुरु राजेन्द्र पुत्रस्ते भवितेति सः ।। 132

तवोत्तमाङ्गादुत्तुङ्गादहमेव नृपोत्तम ।
इतः षष्टितमे मासि सम्भवामि न संशयः ।। 133

इत्येतद्वचनं श्रुत्वा प्रणिपत्यैनमादरात् ।
दुःखं विहाय सन्तुष्टो जगाम सदनं नृपः ।। 134

ततः षष्टितमे मासि सम्प्राप्ते स्वप्रभावतः ।
तस्योत्तमाङ्गादमलादाविर्भूतोऽयमादरात् ॥ 135

तदा दुन्दुभयो नेदुः पुष्पवृष्टिरभूच्छुभे ।
राजा बभूव सन्तुष्टश्चन्द्रोदय इवाम्बुधिः ॥ 136

ब्राह्मणेभ्यस्तदा राजा पुत्रोत्सवसमन्वितः ।
हिरण्यगोगजाश्वानां ददावर्बुदमादरात् ॥ 137

उत्तमाङ्गसमुद्भूतमेनं वीक्ष्य सुतं नृपः ।
उत्तमाङ्गजमित्येवं नाम दिव्यं चकार सः ॥ 138

जातिस्मरोऽयं बाल्येऽपि नवबिल्वदलैः सदा ।
लिङ्गपूजां प्रयत्नेन करोति नियमान्वितः ॥ 139

रुद्राक्षमालाभरणो भस्मोद्धूलनतत्परः ।
श्रीमत्पशुपतीशेति नाम दिव्यं जपत्ययम् ॥ 140

अत्याश्चर्यकरं कर्म क्रियते बालक त्वया ।
किमेतदिति तेनैव पृष्टो राजा (ज्ञा) यमर्भकः ॥ 141

ततो जगाद वृत्तान्तं स्वपूर्वभवसञ्चितम् ।
तच्छ्रुत्वा विस्मितो राजा तमुवाच सुतं प्रति ॥ 142

शिवपूजाप्रभावेण सर्वं ज्ञातं त्वया शिशो ।
कोऽहं पूर्वभवे सम्यग्विचार्य वद सादरम् ॥ 143

इति पृष्टः क्षणं ध्यात्वा बालकः स्मितपूर्वकम् ।
जगाद सर्ववृत्तान्तं तस्यैव नृपतेस्तदा ।। 144

तव जन्मान्यतीतानि सङ्ख्या तेषां न शक्यते(विद्यते) ।
तवैव पापसङ्गेन बहुकुत्सितयोनिषु ।। 145

उत्पत्तिरभवत्पूर्वमति दुःखभयावहा ।
तव मूत्रपुरीषाढ्यगर्भेषु बहुधा स्थितिः ।। 146

सारमेयोदरे पूर्वं तव जन्म सहस्रधा ।
बभूव जन्मना तेन दुःखं भुक्तं त्वया सदा ।। 147

तदनन्तरमेवाभूत्तव रासभजन्मनाम् ।
अतिदुःखप्रदं नित्यं सार्धकोटिचतुष्टयम् ।। 148

ततः कोट्यष्टकं जातं तव कुक्कुटजन्मनाम् ।
ततः कोटिशतं जातमरण्ये वृकजन्मनाम् ।। 149

सार्धकोट्यष्टकं जातं सपादं सर्पजन्मनाम् ।
ततः शताष्टकं जातं सपादं काकजन्मनाम् ।। 150

ततो दशायुतं जातं सपादं गृध्रजन्मनाम् ।
ततः शतायुतं जातमुलूकाधमजन्मनाम् ।। 151

ततः कोट्यष्टकं जातं सार्धं ते न्यङ्कुजन्मनाम् ।
ततः सार्धार्बुदं जातमाखुपेचकजन्मनाम् । 152

ततो लक्षायुतं जातं सार्धं सरटजन्मनाम् ।
ततो लक्षायुतं जातं मत्स्यमण्डूकजन्मनाम् ।। 153

पञ्चाशल्लक्षमभवन्मायया जन्मनां तव ।
ततो लक्षाष्टकमभूद् घूकबम्भरजन्मनाम् ।। 154

सार्धकोटिद्वयं जातं ततस्ते दंशजन्मनाम् ।
सार्धलक्षद्वयं जातं ततस्ते मेषजन्मनाम् ।। 155

ततः कोटिशतं जातं तव राजिलजन्मनाम् ।
सार्धकोटित्रयं जातं ततस्ते दन्तिजन्मनाम् ।। 156

सार्धकोटित्रयं जातं ततस्ते बर्हिजन्मनाम् ।
जन्मस्वेतेष्वपि सदा दुःखं भुक्तमनेकधा ।। 157

एतज्जन्मन्यवहितं जन्मपूर्वमिति स्थिते ।
तन्मयूरमभूज्जन्म बहुबर्हि(र्ह)विराजितम् ।। 158

त्वया मयूरदेहेन श्रीशैले संस्थितं पुरा ।
दिव्यलिङ्गसमाक्रान्ते शिवभक्तविराजिते ।। 159

पूर्वं मयूरदेहेन त्वया लिङ्गस्य सन्निधौ ।
नृत्यं कृतं त्वया सम्यक् शिवसन्तोषकारणम् ।। 160

तेन पुण्यप्रभावेण श्रीशैले वसतिस्तव ।
बभूव भाग्यदा भूयोजन्मान्ते भोगकारणम् ।। 161

मयूरजन्मनानेन मम सेवां करोत्वयम् ।
ततो राज्याधिपत्यं च भवत्वस्य सुखप्रदम् ।। 162

भुक्त्वा च पुण्यदेहेन भोगमन्ते ततःपरम् ।
मां प्रयात्विति देवेशो ददौ पूर्वं वरं शिवः ।। 163

ततो जन्माभवत्पूर्वं कस्मिंश्चिद्विपिनान्तरे ।
मयूरस्य ततो दैवाच्छ्रीशैलेऽपि स्थितं त्वया ।। 164

तस्मिन् शैलवरे रम्ये त्रिपुरान्तकसंज्ञकम् ।
लिङ्गमेकमभूद्दिव्यं भानुतप्तमनावृते ।। 165

तत्र नित्यं स्वपिच्छेन कृतं पुण्य(ताप)निवारणम् ।
सायं तत्रैव नियतं नर्तनं क्रियते त्वया ।। 166

एवं मासशतं सार्धं संश्रित्य नियतं त्वया ।
स्वेच्छयैव नराधीश संस्थितं पूर्वजन्मनि ।। 167

ततः कालान्तरे राजन् श्रीशैलान्यभुवि त्वया ।
शरीरं त्यक्तममलं पवित्रं शिवसेवया ।। 168

तदा देववरोत्सृष्टा पुण्य(पुष्प)वृष्टिरभून्नृप ।
विमानवरमारुह्य देवेन्द्रोऽपि समागतः । 169

देवेन्द्रेण तदा दत्तं विमानं तुभ्यमुत्तमम् ।
तदारुह्य स्वर्गलोके गतं तेन सह त्वया ।। 170

तत्र मन्दारसंवीतं क्रीडास्थानमभूत्तदा ।
तत्रैव तव तोषार्थं रम्भा नृत्यं चकार च ।। 171

देवेन्द्रः प्रत्यहं तुभ्यं चकाराभ्यर्चनं मुदा ।
तदन्येऽपि सुरा नित्यं पूजां कुर्वन्ति सादरम् ।। 172

कल्पवृक्षैश्च पुष्पाणि सुगन्धीन्यमलानि च ।
स्वयमेव समानीय दत्तानि प्रत्यहं मुदा ।। 173

एवमेवानिशं तत्र मोदमानेन हि त्वया ।
वत्सरायुतपर्यन्तं सन्तोषेण स्थितं पुरा ।। 174

ततोऽभूच्चक्रनाथस्य प्रोद्भूतमुदरे त्वया ।
महदैश्वर्यमनिशं भुक्तमीशप्रसादतः ।। 175

शिवस्यैव प्रसादेन तव शोकापहारकः ।
उत्तमाङ्गादहं जातो वंशवृद्धिकरो नृप ।। 176

इदं शिवप्रसादेन मया ज्ञातं नृपाधिप ।
यथाज्ञातं तथैवोक्तं विपरीतं न किञ्चन ।। 177

तवास्त्यगणितं द्रव्यं सन्ति रत्नानि भूपते ।
शिवालयस्य निर्माणं कुरु रत्नविजृम्भितम् ।। 178

कुरु बिल्ववनं रम्यं शैवस्थानेषु सर्वथा ।
शृणु शैवपुराणानि सर्वदा नृपसत्तम ।। 179

कुरु यत्नेन सम्प्रीतो लिङ्गपूजामहर्निशम् ।
पञ्चाक्षरजपं नित्यं कुरु पापौघनाशनम् ॥ 180

बिल्वपत्रैर्महादेवमर्चयस्वानिशं मुदा ।
कुरु यत्नेन सततं लिङ्गस्यैव निरीक्षणम् ॥ 181

भस्मधारणसंयुक्तः कुरु रुद्राक्षधारणम् ।
गृहाण मोक्षदां नित्यं शैवदीक्षामघापहाम् ॥ 182

शिवप्रीत्यर्थमनिशं वने पञ्चाग्निमध्यगः ।
शिवप्रसादपर्यन्तं तपः कुरु नृपोत्तम ॥ 183

प्रसन्ने सति गौरीशे काशीप्राप्तिर्भविष्यति ।
काशीप्राप्त्या नराधीश मोक्षप्राप्तिर्भविष्यति ॥ 184

कर्तव्यमतियत्नेन मया राज्यस्य पालनम् ।
न राज्यविषये दुःखं त्वया कार्यं नराधिप ॥ 185

तव वृद्धशरीरस्य नार्हा तूष्णीमवस्थितिः ।
सर्वभावेन सततं कुरु शङ्करपूजनम् ॥ 186

शङ्करं शङ्करं नित्यं निःशङ्कं समुपाश्रय ।
शङ्करस्तारको नूनं भविष्यति न संशयः ॥ 187

ब्रह्मोवाच -

इत्येतद्वचनं श्रुत्वा स भूपस्तदनन्तरम् ।
शिवलिङ्गार्चनं चक्रे रत्नस्तम्भविराजितम् ।। 188

हेमप्राकारममलं शिवलिङ्गार्चको नृपः ।
शिवलिङ्गालयप्रान्ते चकारोन्नतमादरात् ।। 189

ततो रत्नमयं लिङ्गं तस्मिन्नेव शिवालये ।
तेन संस्थापितं दिव्यं भूपेन सकलार्थदम् ।। 190

तस्मिन्मणिमये लिङ्गे विश्वव्यापी सदाशिवः ।
नित्यं सन्निहितः साम्बः पूजां गृह्णाति सादरम् ।। 191

प्रत्यहं स्वर्णपुष्पाणां सार्धकोटित्रयं नृपः ।
ददाति शम्भवे प्रीत्या लिङ्गरूपाय सादरम् ।। 192

त्रिकालमप्रमादेन नृपस्तल्लिङ्गपूजनम् ।
करोत्यद्यापि शैवाश्च बहवस्तेन तोषिताः ।। 193

बिल्ववृक्षाश्च बहवस्स्थापितास्तेन भूभुजा ।
तद्बिल्वतरुमूलेषु लिङ्गानि स्थापितानि च ।। 194

बिल्वकण्टकतीक्ष्णाग्रैर्विद्धहस्तोऽपि भूपतिः ।
स्वयमेवानयत्यच्छो बिल्वपत्राणि शम्भवे ।। 195

चन्दनागरुकस्तूरीविलेपनरतोऽपि सः ।
त्यक्त्वा तद्भस्मना नित्यमङ्गलेपं करोति च ॥ 196

प्रियोऽपि रत्नमालोऽपि भूपालस्तानि सर्वथा ।
त्यक्त्वा रुद्राक्षमालाभिश्चकाराङ्गविभूषणम् ॥ 197

नारीजघनमि(मृ)ष्टेशय्योऽपि नृपतिः सदा ।
तत्यक्त्वा भस्मशय्यायां तिष्ठत्यनिशमादरात् ॥ 198

गानप्रियोऽपि नृपतिस्त्यक्त्वा गानरतिं सदा ।
शैवीमेव कथां भूयः शृणोति प्रीतमानसः ॥ 199

शैवदीक्षापि यत्नेन गृहीत्वा शैवसत्तमात् ।
शैवव्रतानि सततं क्रियन्ते तेन सादरम् ॥ 200

पूजयत्यतियत्नेन शैवानेवानिशं मुदा ।
शैवमेवोत्तमं मन्त्रं जपत्यनुदिनं नृपः ॥ 201

अयं शिवप्रसादेन ज्ञात्वा सर्वोत्तमं शिवम् ।
आबाल्यमतियत्नेन शिवपूजापरोऽभवत् ॥ 202

नित्यं मृण्मयलिङ्गानां सहस्रं पूजयत्यहम् ।
शैवद्विजार्बुदस्यायं ददात्यन्नं सदा नृपः ॥ 203

काश्यां प्रत्यहमागत्य विश्वेश्वरमयं नृपः ।
पूजयत्यतियत्नेन रत्नाद्यैः शुद्ध(सिद्धि)साधनैः ॥ 204

ततः सादरमागत्य श्रीमत्पशुपतीश्वरम् ।
बिल्वादिभिः समभ्यर्च्य नत्वा वीरेश्वरं ततः ।। 205

नित्ययात्रादिकं कृत्वा शैवानभ्यर्च्य सादरम् ।
ततः स्वनगरं याति प्रजापालनतत्परः ।। 206

रत्नलिङ्गान्यनेनैव काश्यामगणितानि हि ।
स्थापितान्यपि यत्नेन कालभैरवसन्निधौ ।। 207

शिवपूजाप्रभावेण सर्वलोकेषु सर्वदा ।
अविघ्नितगतिर्याति सोऽयं कामगयानगः ।। 208

न शिवराधनादन्यल्लोके सर्वार्थसाधकम् ।
न शिवात्परमो देवः सर्वाभीष्टप्रदायकः ।। 209

**सभासद ऊचुः -**

कोऽयं पूर्वभवे ब्रह्मन् किमनेन कृतं पुरा ।
प्राप्ताऽनेन कथं काशी देवानामपि दुर्लभा ।। 210

संप्राप्तापि कथं काशी त्यक्ता मोक्षप्रदायिनी ।
इदं विचार्य सकलं वद सन्तोषकारणम् ।। 211

ब्रह्मोवाच -

अयमात्सीपुरा विप्रः शिवव्रतपरायणः ।
शिवैकदेवः सततं हिमवच्छिखराश्रयः ॥ 212

तत्रोवासानिलान्सर्वान्निरुध्य दृढमानसः ।
पञ्चाग्निमध्यगो नित्यं चकारोग्रमयं तपः ॥ 213

चकार युगपर्यन्तं धूमपानमधोमुखः ।
ततः समुद्रपर्यन्तं पृथिव्याश्च प्रदक्षिणम् ॥ 214

सहस्रवारं यत्नेन कृतमासीदनेन हि ।
ततः कृतमनेनैव श्रीशैलस्य पृथङ्मुदा ॥ 215

प्रदक्षिणं शिवप्रीत्यै शतवारं प्रयत्नतः ।
ततः श्रीशैलशिखरे निराहारेण सन्ततम् ॥ 216

तपश्चकार यत्नेन सार्धकोटियुगावधि ।
ततः स तपसो भीमान्निवृत्तः शोककर्शितः ॥ 217

चकार दुःखं बहुधा प्रलपन्पतितो भुवि ।
न श्रीशैलात्परं क्षेत्रं तपःसिद्धिकरं परम् ॥ 218

अत्रापि तपसः शुद्धिः (सिद्धिः) न जाता किंकरोम्यहम् ।
काशीप्राप्त्यर्थमेवात्र तपो घोरतरं कृतम् ॥ 219

तथापि काशी न प्राप्ता नेशः प्रत्यक्षतां गतः ।
यद्यत्र क्रियते नूनं मोक्षो मम भविष्यति ।। 220

तथापि काशी द्रष्टव्या सुराणामपि दुर्लभा ।
काशीप्रयाणकालेषु बहुधर्मा नरैः सदा ।। 221

कर्तव्यास्ते न केनापि शक्यन्ते कर्तुमन्वहम् ।
कृतेनान्येन तपसा विहङ्गस्यापि वा तनुम् ।। 222

यदि दास्यति विश्वेशस्तदा काशीं प्रयाम्यहम् ।
येन केनापि रूपेण काशीप्राप्तिरपेक्षिता ।। 223

तादृशं भाग्यमेतस्य क्व जीवस्य भविष्यति ।
शिवमुद्दिश्य बहुधा पूर्वपूर्वभवेष्वपि ।। 224

तपस्तप्तं शिवो मह्यं न प्रसीदति सत्वरम् ।
कथं वा दुरदृष्टानि ममामेयानि सन्ति वै ।। 225

काशीप्राप्तिर्यतो नित्यं विघ्नेनैवाधितिष्ठति ।
किं कर्म कार्यं यत्नेन दुरदृष्टनिवारकम् ।। 226

किं करोमीति निपतन् भुवि निर्विण्णमानसः ।
एतस्मिन्नन्तरे जाता तदा तत्राशरीरवाक् ।। 227

आनन्दामृतदा रम्या सर्वदुःखविनाशिनी ।
इतः सहस्रजन्मान्ते काशी सम्प्राप्यते त्वया ।। 228

विहङ्गस्यैव रूपेण खेदं मा कुरु सर्वदा ।
प्रतिजन्मनि सर्वेशं शङ्करं तपसा सदा ।। 229

समाराधय तीव्रेण काशीप्राप्त्यर्थमादरात् ।
इति सन्तोषदं रम्यमशरीरवचः सदा ।। 230

श्रुत्वा सन्तोषमगमज्जहौ दुःखं ततः परम् ।
सहस्रजन्मनामन्ते काशीप्राप्तिर्ममास्त्विति ।। 231

तपो घोरतरं भूयश्चकार द्विजसत्तमः ।
तत्र कृत्वा तपो घोरं किञ्चित्कालं ततःपरम् ।। 232

श्रीशैलान्यभुवं प्राप्य तनुं तां विजहौ द्विजः ।
ततोऽऋषि (ततस्त्वृषि)कुले रम्ये जन्म संप्राप्य पावनम् ।।

भूयो घोरतरं चक्रे तपः शिवपरायणः ।
सहस्रजन्मपर्यन्तमेवमेव पुनः पुनः ।। 234

ऋषिजन्मैव सम्प्राप्य तपः कृतमनेन हि ।
ततः काश्यां बिल्ववृक्षे विहङ्गस्यैव कस्यचित् ।। 235

गर्भात्सम्प्राप जन्मायं पुण्याभिलषितं मुदा ।
निर्गतस्तीव्रमनघो यदायं विहगोदरात् ।। 236

तदा पपात रुधिरं किञ्चिच्छैवस्य मूर्धनि ।
तदा शशाप तद्दृष्ट्वा रुधिरं शैवपुङ्गवः ।। 237

यस्यैतद्रुधिरं तस्य काश्यामस्त्विति सन्ततिः ।
उत्पन्नो विहगस्यैव रूपेणापि सदाशिवम् ।। 238

जातिस्मरो बिल्वपत्रैरभ्यर्चयति शङ्करम् ।
ततः काश्यन्यभूपृष्ठे मृतो दैवात्ततः परम् ।। 239

स्थित्यात्रैव ब्रह्मलोके भूपतिश्चाभवत्ततः ।
अयं कदाचिदासन्नानिमानिन्द्रादिकानपि ।। 240

सम्भावयितुमेवैच्छत् शिवलिङ्गार्चनप्रियः ।
एतादृशानां शैवानां विश्वेशः करुणानिधिः ।। 241

काश्यां मरणमात्रेण निर्वाणं हि प्रयच्छति ।
अतः परमयं पुत्रे राज्यं विन्यस्य सादरम् ।। 242

काश्यां शिवप्रसादार्थं करिष्यति तपो मुदा ।
एतस्य तनुरस्येयं तनुर्नान्या भविष्यति ।। 243

एतच्छरीरनि(वि)गमे मुक्तिरस्य भविष्यति ।
धन्योऽयं सर्वथा धन्या वयमप्यस्य दर्शनात् ।। 244

ईदृशस्य हि शैवस्य दर्शनं दुर्लभं ध्रुवम् ।

**श्रीसदाशिव उवाच -**

इति ब्रह्मवचः श्रुत्वा ते तमेव नृपोत्तमम् ।। 245

प्रणम्य पूजयामासुः परमं विस्मयं गताः ।
तत्पूजितो नराधीशो ब्रह्मणा पूजितः पुनः ।। 246

ययौ स्वनगरं रम्यं इलावर्त्यभिधं मुदा ।
पुरा पशुपतीशस्य सन्निधाने शिवात्मके ।। 247

कश्चिदासीद् द्विजश्रेष्ठः सर्वदा शिवपूजकः ।
तस्यैव निकटे कश्चिच्छकुन्तः कणभक्षकः ।। 248

न्यवसद्धूरितपसा काशीं प्राप्य शिवात्मिकाम् ।
स कदाचिद् द्विजस्याङ्के निविष्टो दौहृदाङ्कितः ।। 249

तं विलोक्य कुशाग्रेण जघान द्विजसत्तमः ।
तदानीमेव स मृतः शकुन्तः प्रलपंस्ततः ।। 250

तद्गर्भान्निर्ययौ सूक्ष्मः शकुन्तो दुःखकर्शितः ।
स शकुन्तो जातमात्रः प्रलपन्नतिदारुणम् ।। 251

गलदश्रुकणः शीघ्रं तमुवाच द्विजं तदा ।
द्विजाधम कथं माता निहता मम सा त्वया ।। 252

बालपुत्रातिवृद्धा च पतिदेवा पतिव्रता ।
बालानां पोषणं मात्रा कर्तव्यमतियत्नतः ।। 253

तेनैव जीवनं सम्यग्बालानां भवति ध्रुवम् ।
अद्यैव भर्तुरेतस्य(ा)मृतिर्नूनं भविष्यति ।। 254

पोषणेन विना नास्ति वृद्धानामपि जीवनम् ।
मदन्येऽपि मरिष्यन्ति(न्ते) चास्या एव हि बालकाः ॥

तेषां मातृविहीनानां कथं स्यात्प्राणधारणम् ।
वयं धन्या भविष्यामः काश्यां मरणमात्रतः ॥ 256

तवैव यातना घोरा भविष्यति न संशयः ।
अस्माभिः पूर्वपूर्वेष(षु) जन्मसु प्रबलं तपः ॥ 257

काश्यां तनुवियोगार्थं कृतमुद्दिश्य शङ्करम् ।
काश्यामन्तर्गृहे शैवे जीवहत्या कृता त्वया ॥ 258

तेन पापेन दुष्टात्मन्यातना ते भविष्यति ।
अनेकयुगपर्यन्तघोरदुःखौघसंश्रयाम् ॥ 259

पैशाचीं तनुमाश्रित्य वस दुर्भग दुर्मुख ।
क्षुत्तृट्परीतः सततं निर्जनं वनमाश्रितः ॥ 260

निवसस्व(?) दुराचारः पिशाचतनुसंश्रयः ।
एवं प्रलपमानं तं दृष्ट्वा ब्रह्मा विहङ्गमम ॥ 261

विलोक्य तं द्विजं चाथ बभाषे वचनं तदा ।
एतस्य माता निहता किमर्थं सा द्विज त्वया ॥ 262

कृत्वा काश्यां वृथापापं किमर्थं स्थीयते त्वया ।
एतन्मरणमात्रेण पतिरस्यास्तु तादृशः ॥ 263

मरिष्यत्यद्य वा श्वो वा सन्देहो नात्र संशयः ।
पिशाच[स्य] तनवः प्राप्या मृते तज्जीवसङ्ख्यया ।। 264

त्वया वने न सन्देहो निर्जले निर्जने सदा ।
किञ्च काश्यां त्वया पूर्वं परार्थमपि यत्नतः ।। 265

द्रव्यलोभेन दुष्टात्मन्रुद्राध्यायजपः कृतः ।
तेन रुद्रपिशाचत्वं त्वया दुःखदमन्वहम् ।। 266

प्राप्तव्यं नात्र सन्देहो भैरवस्यापि तर्जनम् ।
रुद्राध्यायजपः काश्यां यः परार्थं करिष्यति ।। 267

स वेदराशिपूर्णोऽपि पिशाचो भवति ध्रुवम् ।
अल्पस्याप्यत्र धर्मस्य विक्रेता सर्वथा द्विजः ।। 268

भविष्यति न सन्देहो पिशाचः पर्वताकृतिः ।
अनन्तफलदं धर्मं रुद्राध्यायजपार्जितम् ।। 269

यः प्रयच्छति मूढात्मा परस्मै धनलोभतः ।
शरीरमपि देयं स्यात्कदाचिद्धनलोभतः ।। 270

फलं न देयमन्यस्मै रुद्राध्यायजपार्जितम् ।
श्रीरुद्रजपमन्यार्थं करोति च धनेच्छया ।। 271

स पतत्येव नरके यावदाचन्द्रतारकम् ।
पुरा धननिधिर्नाम कश्चिद्भूचक्रपालकः ।। 272

वेदशास्त्रपुराणज्ञो ब्राह्मणोऽभवदुत्तमः ।
स कदाचित्तपो घोरं काशीप्राप्त्यर्थमेव हि ॥ 273

ततः शिवप्रसादेन धनमार्जित्य धर्मतः ।
काशीं प्राप स मातङ्गतुरङ्गधनसंवृतः ॥ 274

सम्प्राप्य काशीं विश्वेशं सम्पूज्य विधिवद् द्विजः ।
मेने कृतार्थमात्मानं शिवैकशरणः सदा ॥ 275

ततः स्वकं धनं सर्वं द्विजेभ्यो दातुमुद्यतः ।
प्रणम्य विप्रानमलानुवाच शिवतत्परान् ॥ 276

**धननिधिरुवाच -**

धनमार्जितमेतस्य व्ययः काश्यां मतो मम ।
रुद्राध्यायजपं कृत्वा गृह्णन्तु धनमुत्तमम् ॥ 277

**ब्राह्मणा ऊचुः -**

काश्यां परार्थमनघो रुद्राध्यायजपो द्विज ।
कथं कार्यः प्रयत्नेन वदास्माभिर्धनेच्छया ॥ 278

परार्थं धनलोभेन रुद्राध्यायजपः कृतः ।
द्वित्रैस्तु समनुप्राप्ता पैशाची दुःखदा सदा ॥ 279

किं धनेनाद्य बहुना किं कार्यं तेन सादरम् ।
किमेतद्धनपुष्टेन शरीरेणापि तद्वद ॥ 280

अस्माभिः पूर्वपूर्वेषु जन्मसु प्रत्यहं तपः ।
कृतं तेनैव काशीयं प्राप्ता माहेश्वरी पुरी ॥ 281

ततः परं द्विजास्माभिः कर्तव्यं नास्ति सर्वथा ।
न धनेच्छा शरीरेच्छा न चान्येच्छा न संशयः ॥ 282

अतः परं द्विजात्यल्पकालेनैवात्र सर्वथा ।
विश्वेशकृपया सम्यक्तनुत्यागो भविष्यति ॥ 283

ततो विश्वेश्वरः स्वाङ्के निवेश्यास्मभ्यमादरात् ।
शैवं पञ्चाक्षरं दिव्यं तारकं दास्यति ध्रुवम् ॥ 284

ततोऽनेकमहादुःखसङ्गत्यागो भविष्यति ।
ततः प्राप्तव्यमस्माभिः स्वरूपं शङ्करस्य हि ॥ 285

धर्मेणैव सदा स्थेयं सर्वैः काश्यां प्रयत्नतः ।
मोक्षं दास्यति विश्वेशो देहान्ते सर्वथा द्विज ॥ 286

इत्युक्त्वा ते द्विजा धीरा निवृत्ता धनलोभतः ।
शिवलिङ्गार्चकास्तस्थुः पाण्डुपर्णजलाशनाः ॥ 287

ततः स विप्रः स्वधनं विलोक्यात्यन्तदुःखितः ।
रुरोदोच्चैर्धनत्यागः पात्रे नासीदिति द्विज ॥ 288

तदानीमागतः कश्चिद्ब्राह्मणो वेदपारगः ।
मा रोदीः किमभीष्टं ते तत्करोमीति सोऽब्रवीत् ॥ 289

इत्युक्तवन्तं तं विप्रं प्रणम्य द्विजसत्तमः ।
कृताञ्जलिपुटो नम्रो बभाषे वचनं द्विज ॥ 290

द्विजवर्योत्तमाश्वानामस्ति कोट्ययुतं मम ।
मत्तमातङ्गकोटीनामस्ति लक्षचतुष्टयम् ॥ 291

सुवर्णरत्नरचितं पात्राणां तु द्विजोत्तम ।
सङ्ख्या नास्ति न सन्देहो गवामपि ममैव हि ॥ 292

इदं धनं मया देयं मदर्थे यः करिष्यति ।
रुद्राध्यायजपं सम्यक्तस्मै नास्त्यत्र संशयः ॥ 293

एकवारं कृतेनापि रुद्राध्यायजपेन हि ।
एकेनैव द्विजेनेदं प्राप्तव्यं धनमुत्तमम् ॥ 294

इदं धर्मार्जितं वित्तं श्रीरुद्राध्यायजापके ।
निधाय तदनु प्रीतो भवाम्येतन्नसंशयः ॥ 295

इत्युदीरितमाकर्ण्य स एव द्विजपुङ्गवः ।
उवाच वचनं चारु तदा धननिधिं प्रति ॥ 296

एकवारं द्विजश्रेष्ठ त्वदर्थं सावधानतः ।
रुद्राध्यायजपं सम्यक्करिष्ये मुक्तिमण्टपे ॥ 297

इत्युक्त्वा तदनुज्ञातो मुक्तिमण्टपमाश्रितः ।
एकवारं चकाराथ रुद्राध्यायजपं द्विजः ॥ 298

समाप्ते च जपे सस्मै धनं धननिधिर्मुदा ।
ददौ बहुविधं सर्वं गजाश्वादिकमादरात् ।। 299

ततो धननिधिः काश्यांमल्पैरेव दिनैर्मृतः ।
अवाप शिवसायुज्यं शिवस्यैव प्रसादतः ।। 300

द्विजोऽपि स धनग्राही ततः सन्तत (प्त) मानसः ।
वसिष्ठं प्रणिपत्याह कृताञ्जलिपुटो वचः ।। 301

परार्थं धनलोभेन रुद्राध्यायजपः कृतः ।
मयि (या) पूर्वं प्रयत्नेन धर्मशास्त्रविचक्षण ।। 302

परार्थकृततद्रुद्रजपसञ्चितपातकम् ।
केन नश्य (ङ्क्ष्य) ति or (नङ्क्ष्यति) किं वात्र
साधनं वद सादरम् ।। 303

**वसिष्ठ उवाच -**

रुद्राध्यायजपं पुण्यं यः परार्थं करिष्यति ।
स पिशाचो भवत्येव नास्ति तत्पापनिष्कृतिः ।। 304

वेदपारायणैधर्मैरनन्तैरपि सर्वदा ।
उग्रानन्ततपोभिश्च तत्पापं न विनश्यति ।। 305

काश्यां रुद्रजपं कृत्वा परार्थं यस्तु जीवति ।
धिग्धिग्धिक्तस्य धिग्जन्म
धिग्धिग्धिक्तस्य जीवनम् ।। 306

परार्थं रुद्रविक्रेता भवानायतिदारुणम् ।
द्विज रुद्रपिशाचत्वं प्राप्नोत्यत्र न संशयः ।। 307

महापर्वतसङ्काशं शरीरं ते भविष्यति ।
सूच्यग्रसदृशं वक्त्रं भविष्यति तव स्फुटम् ।। 308

सहस्रयुगपर्यन्तं क्षुत्पिपासातुरोऽनिशम् ।
वसिष्यसि न सन्देहो निर्जने निर्जले वने ।। 309

काश्यामेव शरीरं ते दैवात्त्यक्तं यदि त्वया ।
तदा रुद्रपिशाचत्वं प्राप्य दुःखमवाप्स्यसि ।। 310

कोटिशस्तव पार्श्वस्थाः कालभैरवकिङ्कराः ।
दीर्घतप्तोरुखङ्गाग्रैस्ताडयिष्यन्ति दुर्मदाः ।। 311

सहस्रयुगपर्यन्तमेवं स्थित्वा ततः परम् ।
प्राप्नोति दुःखदां नित्यं कालभैरवयातनाम् ।। 312

एकवारं कृतोऽन्यार्थं रुद्राध्यायजपो द्विज ।
एवं दुःखप्रदः सोऽयं किम्पुनर्बहुशः कृतः ।। 313

रुद्राध्यायो न जप्तव्यः काम्यमुद्दिश्य सर्वथा ।
स्वैरपि स्वार्थमनघैः कदाचिदपि यत्नतः ॥ 314

शिवार्थमेव कर्तव्यो रुद्राध्यायजपः सदा ।
निष्कामैरनघैः शुद्धैर्मोक्षदः शिवचिन्तकैः ॥ 315

रुद्राध्यायस्य माहात्म्यं ब्रह्मणापि न बुध्यते ।
किंतु तच्छङ्करेणैव ज्ञायते तत्वतो ध्रुवम् ॥ 316

रुद्राध्यायजपः सम्यक्कर्तुमेव न शक्यते ।
ब्रह्मणापि न सन्देहः सत्यमेवोच्यते मया ॥ 317

रुद्राध्यायजपे प्रोक्ता नियमा बहवो मताः ।
ते कथं नियमात् कर्तुं शक्यन्ते मादृशैर्द्विजैः ॥ 318

यथाविधि कृतः सम्यग्रुद्राध्यायजपो द्विजैः ।
मोक्षप्रदो भवत्येव पापारण्यदवानलः ॥ 319

रुद्राध्यायजपं कर्तुं न जानासि ततस्त्वया ।
कथमन्यार्थमनघो रुद्राध्यायजपः कृतः ॥ 320

रुद्राध्यायजपं कर्तुं यथाविधि यथक्रमम् ।
मयापि यत्नः क्रियते न भवत्येव सर्वथा ॥ 321

अष्टकोटिमहान्यासाः सन्ति शङ्करचोदिताः ।
रुद्राध्यायस्य विमलास्तज्ज्ञानं च कथं भवेत् ॥ 322

इति तद्वचनं श्रुत्वा द्विजो दुःखाभिकर्शितः ।
जगाम निलयं स्वीयं नानाधनविराजितम् ।। 323

तं दृष्ट्वा मुनयः सर्वे भानुं पश्यन्ति सादरम् ।
आचामन्ति च पापिष्ठेत्यनिशं प्रवदन्ति च ।। 324

सर्वं सन्निहितं क्रूरं नायं पश्यति भैरव[म्] ।
अनेन कथमन्यार्थे कृतो रुद्रजपो मुदा ।। 325

अत्राऽयाचितमप्यन्नं बहु ग्राह्यं न सर्वथा ।
कथं बहुविधं द्रव्यं गृहीतं बहु सादरम् । 326

अनेनान्यार्थमनघः कथं रुद्रजपः कृतः ।
स्वल्पं गृहजपोऽप्यत्र कर्तुमेव न शक्यते । 327

कथं काश्यामपि स्थित्वा क्रियते पातकं जनैः ।
न श्रुता प्रायशो नूनं घोरा भैरवयातना ।। 328

अयं विलोक्यते काश्यामेकपातकसंश्रयः ।
कदा गच्छत्ययं नाशं शीघ्रमन्यत्रवात्रवा ।। 329

पापिष्ठालोकनात्पुण्यं नश्यत्येव प्रतिक्षणम् ।
कदा काशीमयं त्यक्त्वा गच्छत्यन्यत्र सत्वरम् ।। 330

एवमुक्त्वा स्थिताः सर्वे काश्यामेव ततो द्विजः ।
मृतो रुद्रपिशाचत्वं प्राप घोरं क्षणेन सः ।। 331

हिमवत्पर्वताकारी(रा)तनुस्तस्याभवत्तदा ।
सूच्यग्रमात्रमभवद्वदनं च भयानकम् ।। 332

तदैव कोटिशो वीराः कालभैरवकिङ्कराः ।
शास्त्राग्रैस्ताडयन्तस्त्वं पीड्यन्तःस्थिताः सदा ।। 333

क्षुत्पिपासातुरो नित्यमिदानीमपि तिष्ठति ।
अग्रे भविष्यत्यनिशं भैरवस्यापि यातना ।। 334

काशीमन्यपुरीतुल्यां मत्वा कुर्वन्ति पातकम् ।
असह्यां नैव जानन्ति भाविभैरवयातनाम् ।। 335

यः काश्यां पातकं कृत्वा मृतोऽन्यत्र भविष्यति ।
तेन घोरतरा नित्यं प्राप्य यामीय(प्राप्यन्ते याम्य)
यातनाः ।। 336

पुनर्जन्मान्तरं प्राप्य आशीं प्राप्य मृतस्ततः ।
प्राप्नोति घोरामनिशं भैरवस्यापि यातनाम् । 337

काश्यां तु कृतपापानां दुःखस्यान्तो न विद्यते ।
हा दुराचारसम्पन्नाः काश्यां तिष्ठन्ति किं वृथा ।। 338

त्वादृशानां तु दुष्टानां काशीवासो न विद्यते ।
गच्छ दुष्ट विहायैनां काशीमन्यत्र दुर्भग ।। 339

येन केनापि रूपेण जीवः शिवतमः शिवः ।
पूजनीयः प्रयत्नेन देवगन्धर्वदानवैः ॥ 340

अयं शिवमयः पुत्र पूर्वपूर्वभवेष्वपि ।
एतद्दुःखप्रधानेन प्राप्य भैरवयातनाम् ॥ 341

अनेन पूर्वं बहुधा काशीप्राप्त्यर्थमादरात् ।
तपःकृतं महादेवमुद्दिश्य शिवसन्निधौ ॥ 342

तपोनिष्ठममुं दृष्ट्वा हिमवान्कम्पमागतः ।
देवाश्च कम्पितास्तेन तपोनिष्ठेन सर्वदा ॥ 343

चचालावनिरेषैनं दृष्ट्वैव तपसां निधिम् ।
समुद्राः क्षुभिताः सर्वे क्षुभितोऽहमपि स्फुटम् ॥ 344

सहस्रकोटिजन्मानि कृतानि तपसा भृशम् ।
गतानि काशीसम्प्राप्त्यै कृतेनास्य बलेन हि ॥ 345

अयं भूचक्रनाथोऽभूत्पूर्वशङ्करपूजया ।
अनन्तमत्तमातङ्गाः स्थिताश्चैतद्गृहाङ्गणे ॥ 346

उच्चैःश्रवःसमानाश्वाः कनकाभरणान्विताः ।
अनन्ताः पालिता नित्यमनेनैव हि लीलया ॥ 347

प्रत्यहं शिवभक्तानां सार्धार्बुदचतुष्टयम् ।
दिव्यान्नैर्दिव्यवस्त्राद्यैरनेनैव हि पोषिताः ॥ 348

सार्धार्बुदानि लिङ्गानि स्थापितानि हिमालये ।
अनेनैव हि रम्याणि मोक्षदानि शुभानि च ॥ 349

अनेनैव शिवस्थानं श्रीशैले कृतमुत्तमम् ।
हेमरत्नमयं दिव्यं रत्नशृङ्गविराजितम् ॥ 350

तत्रैव हेमप्राकारं चकारैकं मनोहरम् ।
स्वर्गलेढिबृहच्छृङ्गरत्नपङ्क्तिविराजितम् ॥ 351

तस्मिन्नेव शिवस्थाने लिङ्गं रत्नमयं शुभम् ।
स्थापयामास विधिवन्मोक्षदं रत्ननामकम् ॥ 352

तत्र रत्नमयं दिव्यं चकार वृषभेश्वरम् ।
अयमेव शिवप्रीत्यै शिवपूजनतत्परः ॥ 353

गोदानानि चकारायं तत्रैव विधिपूर्वकम् ।
कोटिशः शिवतुष्ट्यर्थं रत्नदानानि चानघः । 354

नित्यं पार्थिवलिङ्गानां सहस्रं सार्धमुत्तमम् ।
कृत्वा सम्पूज्य विधिवदयमश्नात्यतस्ततः ॥ 355

अनेन स्वर्गलोकेऽपि सञ्चारो बहुधा कृतः ।
बहुधा सम्यगेवास्मिन् देवेन्द्रेणार्चितं कृतम् ॥ 356

तृणीकरोति देवेन्द्रमयमेव शिवार्चकः ।
करोति सेवामेतस्मै देवेन्द्रोऽपि कृताञ्जलिः ॥ 357

इन्द्राद्याश्च सुराः सर्वे कृताञ्जलिपुटाः सदा ।
कुर्वन्ति सेवामेतस्मै कम्पमानाननताननाः । 358

सर्वभोगसमृद्धोऽपि नित्यमुद्धूलने रतः ।
चकारायमतिप्रीत्या भव्यो रुद्राक्षधारणम् ॥ 359

भस्मन्येवानिशं शय्यामयं प्रत्यहमादरात् ।
करोति सुखशय्योऽपि सर्वदा शिवचिन्तकः ॥ 360

शिवेति नाम शिवदं जपत्ययमहर्निशम् ।
नृत्यत्यपि शिवस्याग्रे चित्रनृत्यविशारदः ॥ 361

नित्यं राजतलिङ्गानां सार्धकोटित्रयं मुदा ।
ददाति शिवभक्तेभ्यः सदक्षिणमयं द्विजः ॥ 362

दिव्यं मणिमयं लिङ्गमेकमस्याभवत्पुरा ।
तस्मिन् नृत्यति देवेशः शिवो गौरीमनोहरः ॥ 363

अयं शिवैकशरणो विष्णुं मामपि सर्वथा ।
कदाचिदपि गर्वेण गणयत्येव न ध्रुवम् ॥ 364

अनेनैतादृशी पूजा शङ्करस्य कृता मया ।
शिवान्यदेवाः शक्यन्ते कर्तुं यो वेति सर्वदा ॥ 365

**द्विज उवाच -**

ईदृशेन शकुन्तस्य रूपं प्राप्तं कथं वद ।
सर्वज्ञोऽपि यतो ब्रह्मन् भवान् शङ्करपूजकः ।। 366

**ब्रह्मोवाच -**

अनेन काशीयात्रार्थमुद्युक्तं पूर्वमादरात् ।
श्रुताश्च काशीयात्रार्थं नियमाः श्रुतिचोदिताः ।। 367

श्रुत्वा तान्नियमान्कर्तुमदक्षः शोककर्शितः ।
रुरोद विधिवत्काशी प्राप्या नेति मुहुर्मुहुः ।। 368

नियमेन विना नेयं काशीयात्रा फलप्रदा ।
नियमाचरणं कर्तुं मनुष्यैनैव शक्यते ।। 369

धर्मो हि नियमभ्रंशात्पूर्वो नष्टो भविष्यति ।
धर्मनाशे नरो रिक्तो भविष्यत्येव सर्वथा ।। 370

ततः क्लेशात्कृतं पूर्वमपि यद्बहुधा मुदा ।
तत्सर्वं नियमभ्रंशात्क्षणेनैव भविष्यति ।। 371

न मानुषेण देहेन काशीयात्रा मया ततः ।
कर्तव्या नियमाचाराः क्षणेनात्र न संशयः ।। 372

काशीप्राप्तिर्ममोद्देश्या काश्यां च मरणं ततः ।
तच्च स्वविहितेनैव धर्मेणैव स्थितस्य ते ॥ 373

धर्मास्तु विहिताः शास्त्रे मनुष्याणां च पक्षिणाम् ।
ततः पक्षितनुं लब्ध्वा काश्यां त्यक्ष्ये तनुं ततः ॥ 374

काश्यां मरणमात्रेण मह्यं शुद्धाय शङ्करः ।
शैवं पञ्चाक्षरं दत्त्वा मोक्षं दास्यत्यसंशयम् ॥ 375

इति सम्यग्विचार्यायं त्यक्त्वा पूर्वतनुं ततः ।
अत्रैव शकुनिर्जातो योगमार्गविचक्षणः ॥ 376

तदानीं मरणासन्नः प्राणान्मुञ्चत्ययं खगः ।
सायुज्यरूपा मोक्षश्रीर्भविष्यति शिवेच्छया ॥ 377

फलितानि तपांस्यद्य दानान्यत्यद्भुतानि च ।
धर्माः फलोन्मुखाः सर्वे पूर्वपूर्वभवार्जिताः ॥ 378

सर्वे मनोरथाः पूर्णाः काश्यां मरणमात्रतः ।
पापलेशविहीनोऽयं धन्यः शङ्करसम्मतः ॥ 379

ईदृशं मरणं काश्यां दुर्लभं मुक्तिसाधनम् ।
अनन्तधर्मसङ्घानां परिपाकोऽयमद्भुतः ॥ 380

धन्यानां मरणं काश्यामेवमेव हि जायते ।
शिवार्थकृतधर्माणां शैवानां मोक्षदायकम् । 381

एवमुक्त्वा द्विजं शुद्धाः नत्वा पशुपतीश्वरम् ।
कालभैरवपूजार्थं ययौ ब्रह्मा ततः परम् ।। 382

ततो गत्वासवे तस्मै शैवः पञ्चाक्षरो मया ।
दत्तस्ततोऽसौ मोक्षं च प्राप देवर्षिदुर्लभम् ।। 383

पुरा पशुपतीशस्य कुण्डे स्नानार्थमुत्तमम् ।
युवा शैववरः कश्चिदागतः शिवसन्निधौ ।। 384

जलमध्ये निविष्टं तं स्नानार्थं शैवपुङ्गवम् ।
सुन्दरं मन्मथाकारं ददृशुर्नागकन्यकाः ।। 385

ततस्तमतिवेगेन निन्युःशेषालयं च ताः ।
तं दृष्ट्वा सहसोत्थाय शेषो नत्वा कृताञ्जलिः । 386

नानामणिगणाकीर्णे मृदुसिंह्मासने शुभे ।
उपवेश्य ततश्चक्रे पूजां तस्य यथाविधि ।। 387

ततः प्रसन्नवदनं शैवं वीक्ष्य स्थिरासनम् ।
उवाच वचनं चारु शेषो नत्वा पुनः पुनः ।। 388

कुतः समागतं श्रीमन् देवः कः पूज्यते त्वया ।
सर्वदेवोत्तमः को वा तत्सर्वं वद सादरम् ।। 389

शैवः (उवाच) -

काशीति नगरी काचित्सर्ववेदेषु विश्रुता ।
नागलोकोपरि स्वस्था तिष्ठत्येका शिवात्मिका ।। 390

सा काशी सर्वदेवैश्च पूजिता सादरं सदा ।
सा चानन्ततपोधर्मफलप्राप्या हि दुर्लभा ।। 391

ततः समागतं नित्यं मया सम्पूज्यते शिवः ।
यं न वेदा विजानन्ति स शिवः स्मर्यते सदा ।। 392

यस्यान्तं न विदुर्वेदा ब्रह्मविष्ण्वादयः सुराः ।
तस्यैव शङ्करस्याच्छं लिङ्गं सम्पूज्यते मया ।। 393

यल्लिङ्गपूजनं नित्यं सर्ववेदेषु निश्चितम् ।
यन्मोक्षदमनायासात् तदेव क्रियते सदा ।। 394

शिवोऽस्मत्कुलजैः सर्वैः सबालैः पूज्यते सदा ।
शिवपूजां विहायाम्बु पीयते न कदाचन ।। 395

नित्यमस्मत्कुले स्त्रीणां व्रतं हि शिवपूजनम् ।
शिवनामानि गायन्ति कलकण्ठ्यः स्त्रियः सदा ।। 396

बालक्रीडनकालेऽपि लिङ्गं मृण्मयमुत्तमम् ।
कृत्वा बिल्वदलैः शुद्धैः पूजां कुर्वन्ति सादरम् ।। 397

लिङ्गं मनोहरं लब्ध्वा प्रणमन्ति स्तुवन्ति च ।
नृत्यन्ति बहुधा बालाः शम्भो शिव शिवेति च ॥ 398

नाहं भोक्ता शिवो भोक्ता शिवोऽन्नमिति बालकाः ।
कुर्वन्ति भोजनं शुद्धं प्रतिग्रासेऽपि सर्वथा ॥ 399

शिवायानर्पितं भोज्यं भुज्यते न कदाचन ।
शिवायानर्पितं नव्यं वस्त्रं न परिधीयते ॥ 400

शिवायानर्पितं दिव्यं चन्दनं पुष्पमेव वा ।
नैवास्मदुपभोगार्थं क्रियतेऽस्मत्कुलोद्भवैः ॥ 401

उद्धूलनं त्रिपुण्ड्रं च तथा रुद्राक्षधारणम् ।
सर्वपापहरं नित्यं क्रियतेऽस्मत्कुलोद्भवैः ॥ 402

सर्वैरस्मत्कुलोत्पन्नैः शिवशास्त्रपरायणैः ।
शङ्करध्याननिरताः सर्वेऽप्यस्मत्कुलोद्भवाः ॥ 403

शिवान्यस्य न कुर्वन्ति ध्यानं स्वप्नेऽपि सर्वथा ।
आबालवृद्धमप्यस्मत्कुलजैः शिवदैवतैः ॥ 404

शिवनामान्यनामापि गृह्यते न कदाचन ।
सर्वेऽप्यस्मत्कुलोत्पन्नाः शिवनामैकजीवनाः ॥ 405

शिवनामाङ्किता धन्याः शिवैकशरणाः सदा ।
शिवोऽस्माकं धनं बन्धुः शिवोऽस्माकं प्रभुः पिता ॥ 406

शिवोऽस्मकं हिता माता शिवोऽस्माकं हि जीवनम् ।
पुरा हिमालये विष्णुं तपोनिष्ठं चतुर्मुखः ।। 407

प्रणम्योवाच चतुरो वाक्यं वाक्यशिारदः ।
सर्ववेदेषु विख्यातं शिवलिङ्गार्चनं हरे ।। 408

तल्लिङ्गमनघं भव्यं निर्विकारं निरञ्जनम् ।
लिङ्गाचर्नस्य माहात्म्यं ममैवं निगमैरपि ।। 409

न ज्ञातं सर्वथा सम्यगिति ज्ञातं मया ध्रुवम् ।
शिवः केवलरूपेण पूजितो मुक्तिदायकः ।। 410

शिवमूर्तिः कथं ध्येया शिवस्य क्वास्ति सन्निधिः ।
त्वयापि लिङ्गमाहात्म्यं कथं ज्ञातं जनार्दन ।। 411

तत्त्वमाचक्ष्व विज्ञाय सम्यगादरपूर्वकम् ।

**विष्णुरुवाचः** -

न मया शिवलिङ्गस्य माहात्म्यं ज्ञायते विधे ।। 412

परन्तु वेदविहितं क्रियते लिङ्गपूजनम् ।
यन्न वेदैरपि ज्ञातं लिङ्गमाहात्म्यमद्भुतम ।। 413

तन्मया मादृशैर्वान्यैः कथं ज्ञेयं भविष्यति ।
अशेषं लिङ्गमाहात्म्यं ज्ञातुमेव सदा मया ।। 414

क्रियतेऽत्र तपो घोरं शिवमुद्दिश्य सादरम् ।
पञ्चाग्निमध्ये वसतस्तपोनिष्ठस्य सन्ततम् ॥ 415

षष्टिकोटियुगा जाता अथ शैवव्रतस्य हि ।
इदानीमपि देवेशःशम्भुर्मे न प्रसीदति ॥ 416

जीर्णमेतदभूदङ्गं किङ्कर्तव्यमतः परम् ।
शिवप्रसादपर्यन्तं तपोनिष्ठो जितेन्द्रियः ॥ 417

निराहारेण सततमत्रैव निवासाम्यहम् ।
त्वयाप्यत्र तपश्चर्या कर्तव्या सादरं सदा ॥ 418

शिवमुद्दिश्य विश्वेशमाप्रसादं महेशितुः ।
अज्ञातलिङ्गतत्वस्य मोक्षो न भवति ध्रुवम् ॥ 419

ततः कुरुष्व यत्नेन तपो घोरतरं मुदा ।
इत्युक्तो विष्णुना ब्रह्मा ततः पञ्चाग्निमध्यगः ॥ 420

त्रिकोटियुगपर्यन्तं चकारोग्रं तपो मुदा ।
तदा तत्तपसा क्षुब्धा सर्वभूताः सुरास्तदा ॥ 421

चकम्पे भूमिरखिला सशैलवनकानना ।
ततो भू(या)तेषु बहुषु देवकल्पेषु शङ्करः ॥ 422

आविरासील्लिङ्गरूपी तयोर्मध्ये सदाशिवः ।
तल्लिङ्गमनलप्रख्यमनावृत्तं विधिर्हरिः ॥ 423

दृष्ट्वा बभूवतुः शीघ्रं तत्तेजोऽभिहतप्रभौ ।
ज्वलद्वह्निगणाकारतल्लिङ्गप्रभया दिशः ॥ 424

प्रदीपिताः प्रभाश्चैव जगद्व्याप्य स्थिताः सदा ।
तदा विधिरुवाचेदं विष्णुं प्रतिहृतप्रभम् ॥ 425

कम्पमानः स्वयं धैर्यान्माभैषीरिति सादरम् ।
ज्योतिःस्वरूपममलं शिवलिङ्गमिदं शुभम् ॥ 426

प्रलयानलसङ्काशं दृष्टमद्य शुभावहम् ।
आविरासीत्कथं लिङ्गमेतन्मूलं क्व वर्तते ॥ 427

त्वयाग्रभागो विमलः सम्पूज्यः सर्वसाधनैः ।
मूलाग्रभागो लिङ्गस्य द्रष्टव्यश्चातियत्नतः ॥ 428

यद्दर्शनेन मोक्षोऽपि करस्थोऽद्य भविष्यति ।
लिङ्गमूलं विद्धित्वैवं शीघ्रमायाहि माधव ॥ 429

मया लिङ्गाग्रभागोऽपि दृष्ट्वैवागम्यते ध्रुवम् ।
इत्युक्त्वा हंसरूपेण ययावूर्ध्वं विधिस्तदा ॥ 430

विष्णुर्वराहवपुषा पातालमगमत्ततः ।
विदार्य सप्तपातालान् वराहवपुषा हरिः ॥ 431

ययौ तीक्ष्णाग्रदंष्ट्राभ्यां वायुवेगमुपाश्रितः ।
ततो ददर्श विपुलं लोकाधारमुपस्थितम् ॥ 432

कूर्मं जलमये लोके दृढपृष्ठमनामयम् ।
तमप्यतीत्य सहसा प्रविश्य च महा ब(बि)लम् ।। 433

सहस्रयुगपर्यन्तं चचार जलमण्डले ।
ततः श्रान्तः क्वचिद्विष्णुः किञ्चित्कालं जले स्थितः ।। 434

पुनर्बभ्राम बहुधा बहुकालं जले बली ।
तल्लिङ्गमूलममलमदृष्टैव ततो हरिः ।। 435

चिरकालेन सम्प्राप भुवं भग्नमनोरथः ।
तदा(था) विधिरपि भ्रान्त्वा बहुकालमनाकुलः ।। 436

तदा सर्वोर्ध्वलोकेषु तल्लिङ्गाग्रदिदृक्षया ।
लिङ्गाग्रभागममलमदृष्ट्वा श्रान्तविग्रहः ।। 437

खिन्नचित्तो भुवं प्राप छिन्नशीर्ष इवोरगः ।
ततो ब्रह्मा स्वकं रूपं समास्थाय शिवं मुहुः ।। 438

प्रणम्य बहुधा चक्रे स्तोत्रमेतदघापहम् ।

**ब्रह्मोवाच -**

नमस्ते देवदेवाय नमस्तेऽनन्तमूर्तये ।। 439

नमो लोकैकनाथाय नमस्ते सर्वसाक्षिणे ।
नमस्ते निर्विकाराय नमस्तेऽनन्तचक्षुषे ।। 440

नमस्तेऽनन्तहस्ताय नमस्तेऽनन्तरूपिणे ।
नमस्ते निर्गुणानन्त नमस्ते सगुण प्रभो ॥ 441

नमस्ते जगदाधार नमस्ते विश्वभावन ।
नमस्ते सत्वरूपाय नमस्ते लोकरूपिणे ॥ 442

नमस्ते सर्वरूपाय रूपातीताय ते नमः ।
नमस्ते शूद्धबुद्धाय नमस्ते परमात्मने ॥ 443

नमस्ते लिङ्गरूपाय नमस्ते विज्वरानघ ।
नमो वेदान्तवेद्याय नमस्ते वेदरूपिणे ॥ 444

नमस्ते ज्ञानरूपाय नमस्ते ज्ञानदायक ।
नमस्ते निष्प्रपञ्चाय निरीहाय नमोऽस्तु ते ॥ 445

निर्द्वन्द्वाय नमस्तेऽस्तु निर्मलायास्तु ते नमः ।
निरवद्य नमस्तेऽस्तु निरामय नमोऽस्तु ते ॥ 446

निष्कलङ्क नमस्तेऽस्तु व्यापकाय नमोऽस्तु ते ।
नमस्ते यज्ञरूपाय यज्ञकर्त्रे नमोऽस्तु ते ॥ 447

नमस्ते भूरिरूपाय नमस्ते शर्मदायिने ।
नमो हिरण्यहस्ताय सेनान्ये ते नमो नमः ॥ 448

नमो दिक्पतये तुभ्यं कक्षाणां पतयेनमः ।
नमः सस्पिञ्जरायाच नमस्तेऽस्तु त्विषीमते ॥ 449

नमः पथी(?)नां पतये कुलुञ्चाय नमोऽस्तु ते ।
विव्याधिने नमोऽन्नानां पतये ते नमो नमः ॥ 450

नमस्ते हरिकेशाय नमो भाव्योपवीतिने ।
पुष्टानां पतये तुभ्यं नमस्ते पुष्टिदायिने ॥ 451

जगतां पतये नित्यं नमो रुद्राय ते नमः ।
परातताथिने नित्यं नमस्ते गूढरूपिणे ॥ 452

क्षेत्राणां पतये नित्यं नमः सूताय ते नमः ।
नमो हन्त्याय दार्व्याय विश्वगुप्ताय ते नमः ॥ 453

वनानां पतये नित्यं रोहिताय नमोऽस्तु ते ।
नमः स्थपतये नित्यं वृक्षाणां पतये नमः ॥ 454

नमस्ते मन्त्रिणे नित्यं वाणिजाय नमोऽस्तु ते ।
वृक्षाणां पतये नित्यं नमस्तेऽस्तु भुवन्तये ॥ 455

वारिवस्कृतायेश नमस्ते वारिरूपिणे ।
उच्चैर्घोषाय वीराय नित्यानन्दाय ते नमः ॥ 456

पत्तीनां पतये नित्यं कृत्स्नवीताय ते नमः ।
नमस्ते धावते नित्यम् पशूनां पतये नमः ॥ 457

नमस्ते सहमानाय मानातीताय ते नमः ।
नमो हराऽऽव्याधिनीनां पतये ज्ञानचक्षुषे ॥ 458

नमस्ते ककुभायेश कामरूपाय ते नमः ।
निषङ्गिणे नमस्तेऽस्तु दिव्येषुधिमते नमः ॥ 459

नमस्ते तस्करणां च पतये नीतिदायिने ।
नमस्ते वञ्चते नित्यं नमस्ते परिवञ्चते ॥ 460

स्तायूनां पतये नित्यं नमस्तेऽस्तु निचेरवे ।
नमः परिचरायेश परात्पर नमोऽस्तु ते ॥ 461

अरण्यानां च पतये नमो विश्वात्मकाय ते ।
मुष्णतां पतये नित्यं नमस्तेऽपायनाशक ॥ 462

प्रकृन्तानां च पतये नीलोष्णीषाय ते नमः ।
नमो गिरिचरायेश गिरिवर्यप्रियाय ते ॥ 463

कुलुञ्चानां च पतये नमस्ते शुद्धरूपिणे ।
नमो विचित्रवेषाय वेदखेटक ते नमः ॥ 464

वेदमार्गाय दुर्गाय नमस्ते पाशधारिणे ।
नमः परशुहस्ताय नमस्ते शूलधारिणे ॥ 465

नमस्ते मृगहस्ताय नमस्ते मृगरूपिणे ।
नमो भवाय रुद्राय नमः शर्वाय सर्वदा ॥ 466

पशुपाशहरायेश नमः पशुपतीश ते ।
नम उग्राय ते नित्यं भीमाय भयदाय ते ॥ 467

अग्रेवधाय भूताय नमो दूरेवधाय ते ।
हन्त्रे हनीयसे नित्यं नमस्ताराय ते नमः ॥ 468

नमस्ते शम्भवे नित्यं नमस्तेऽस्तु मयोभुवे ।
शङ्कराय नमस्तेऽस्तु सर्वज्ञाय नमोऽस्तु ते ॥ 469

नमो मयस्करायेश वैशन्ताय नमः सदा ।
नमः शिवाय देवाय नमः शिवतराय ते ॥ 470

नमस्तीर्थ्याय कूल्याय नमः पार्याय ते नमः ।
नमो वार्याय देवाय नमः प्रतरणाय ते ॥ 471

नमउत्तरणायेश आतार्याय च ते नमः ।
आलाद्याय नमस्तेऽस्तु नमः शष्प्याय ते मृड ॥ 472

नमः फेन्याय देवाय सिकत्याय च ते नमः ।
प्रवाह्याय नमस्तेऽस्तु हिरण्याय नमोऽस्तुते: ॥ 473

प्रपथ्याय नमस्तेऽस्तु किंशिलाय नमोनमः ।
नमस्तेऽस्तु सदा देव क्षराय च कपर्दिने । 474

पुलस्त्याय नमस्तेऽतु नमो गोष्ठ्याय ते सदा ।
नमो गुह्याय तप्याय गेह्याय च नमोऽस्तु ते ॥ 475

काट्याय गह्वरेष्ठाय हृदय्याय नमो नमः ।
निवेष्प्याय नमो नित्यं पांसव्याय नमोनमः ॥ 476

रजस्याय नमो नित्यं शुष्म्याय च नमोऽस्तु ते ।
हरित्याय नमो देव नमो लोप्याय च ते सदा ।। 477

उलुप्याय नमस्तेऽस्तु नम उर्व्याय ते नमः ।
नमः सूर्म्याय च पर्ण्याय पर्णशद्याय ते नमः ।। 478

नमोऽपगुरमाणाय नमस्तेऽभिघ्नते सदा ।
नम आखिदते नित्यं नमः प्रखिदते सदा ।। 479

नमो विश्वस्वरूपाय गुणातीताय ते नमः ।
नीलग्रीवाय नित्याय शितिकण्ठाय ते नमः ।। 480

व्युप्तकेशाय ते नित्यं सहस्राक्षाय ते नमः ।
नमस्ते घोररूपाय नमस्ते शतधन्वने ।। 481

गिरीशाय नमस्तेऽस्तु शिपिविष्टाय ते नमः ।
मीढुष्टमाय देवाय भव्यायेषुमते नमः । 482

नमो ह्रस्वाय देवाय वामनाय नमो नमः ।
नमोऽस्तु बृहते नित्यं नमो वर्षीयसे सदा ।। 483

नमो वृद्धाय देवाय नमः संवृध्वनाय ते ।
नमोऽग्रियाय शूराय प्रथमाय नमोनमः ।। 484

आशवे ते नमो नित्यमजराय च ते नमः ।।
नमः शीघ्र्याय ते नित्यं शीभ्याय महते नमः ।। 485

नम ऊर्व्याय नीप्याय वस्वन्याय नमोनमः ।
स्रोतस्याय नमो नित्यं दीप्याय च नमो नमः ॥ 486

नमो ज्येष्ठाय शूराय कनिष्ठाय च ते नमः ।
पूर्वजाय नमस्तेऽस्तु नमस्तेऽपरजाय च ॥ 487

मध्यमाय नमस्तेऽस्तु कूश्माण्डाय च ते नमः ।
नमः परन्तपायेश ताराय सकलात्मने ॥ 488

जघन्याय नमस्तेऽस्तु बुध्नियाय नमो नमः ।
सोभ्याय प्रतिसर्याय नमो याम्याय ते नमः ॥ 489

नमः क्षेम्याय वर्म्याय उर्वर्याय नमो नमः ।
श्लोक्याय चावसान्याय नमो मङ्गलरूपिणे ॥ 490

नमो वन्याय कक्ष्याय श्राव्याय च नमो नमः ।
प्रतिश्राव्याय शान्ताय शरण्याय नमो नमः ॥ 491

नमः सदाशुषेणाय नमश्चाशुरथाय च ।
नमः शूरस्वरूपाय भेत्रे च भयदायिने ॥ 492

नमोऽस्तु वर्मिणे तुभ्यं नमो नित्यं वरूथिने ।
बिल्मिने च नमो नित्यं नमः कवचिने सदा ॥ 493

श्रुताय श्रुतसेनाय दुन्दुभ्याय च ते नमः ।
नमस्त आहनन्याय धृष्णवे प्रमृशाय च ॥ 494

तीक्ष्णेषवे नमस्तुभ्यं नम आयुधिने सदा ।
नमो गोप्त्रे अश्वहन्त्रे आ(स्वा)युधाय सुधन्वने ।। 495

नमस्तुत्याय पथ्याय नमः सूद्याय ते नमः ।
सू(स)रस्याय नमो नित्यं नमो नाद्याय ते नमः ।। 496

वैशन्ताय नमो नित्यमग्रगण्याय ते नमः ।
नमोऽस्र्वेकरूपाय नमः कूप्याय ते सदा ।। 497

नमो वन्द्याय वर्ष्याय वर्म्यायामृतरूपिणे ।
नमो मेध्याय भौमाय विद्युत्याय नमो नमः ।। 498

ईध्रियाय नमस्तेऽस्तु आतप्याय नमो ममः ।
नमो वात्याय रेश्म्याय वास्तव्याय नमो नमः ।। 499

वास्तुपाय नमस्तेऽस्तु नमः साम्बाय सर्वदा ।
नमश्चन्द्रकिरीटाय नियताय नमोऽस्तु ते ।। 500

नमोऽनन्तगुणोपेत सोम सर्वोत्तम प्रभो ।
नमस्ते त्र्यम्बक श्रीमन् नमस्ताम्राय ते नमः ।। 501

नमो विश्वैकनिलय नमो विश्वैकसंस्तुत ।
नमो विधूतपापाय महादेवाय ते नमः ।। 502

नमस्ते पार्वतीनाथ नमस्ते त्रिपुरान्तक ।
नमस्ते करुणासिन्धो नमस्ते भक्तवत्सल ।। 503

नमस्ते कालकालाय कालकालाय ते सदा ।
नमस्ते कालरूपाय नमस्ते वरदाय च ।। 504

नमः सर्वोत्तम श्रीमन्सदाशिव नमोऽस्तु ते ।
हिरण्यरूप चिद्रूप हिरण्यनिलयामल ।। 505

नमस्तेऽस्तु हिरण्यात्मन् हिरण्यपतये नमः ।
न त्वदन्यो महादेव लोकनाथ जगन्मय ।। 506

न त्वदन्यः सुराराध्यो न त्वदन्यो जगत्प्रभुः ।
नमो भवाय भीमाय भग्नाय भवदाय ते ।। 507

देवतासार्वभौमाय शम्भवे प्रभवे नमः ।
त्वदन्यो वेदवेद्यो न न त्वदन्यः सुरेष्टदः ।। 508

न त्वदन्यः सदा सेव्यो न त्वदन्यो जगत्पिता ।
त्वमेव भूषणं रम्यं त्वमेव मम जीवनम् ।। 509

त्वमेव मम मातासि त्वमेव हि पिता मम ।
त्वमाराध्यतमः शम्भो मम देवोत्तम प्रभो ।। 510

न त्वदन्यपदद्वन्द्वमर्चयामि कृपानिधे ।
न शृणोमि कथामन्यां शिवनामविवर्जिताम् ।। 511

शिवनामान्यनामानि न वदामि महेश्वर ।
शिवलिङ्गं विहायान्यं न पश्यामि च सादरम् ।। 512

शिवलिङ्गं विहायान्यद्ध्यातं च न कदाचन ।
अपराधान्क्षमस्वेश मम शङ्कर सर्वदा ।। 513

स्वरूपं तव विज्ञातु ं दुःशकं नात्र संशयः ।
वैदैः सर्वैरपि श्रीमन् तव रूपं सदाशिव ।। 514

न ज्ञातं तादृशं रूपं मया ज्ञेयं कथं प्रभो ।
लिङ्गस्याग्रं मया ज्ञातुमज्ञानाद्गतमीश्वर ।। 515

अपराधं क्षमस्वाद्य दीनवत्सल शङ्कर ।
प्रणतं पाहि मां शम्भो करुणारसवारिधे ।। 516

मां न मुञ्च महादेव पाहि पाहि सदाशिव ।
इति स्तुत्वा महादेवं प्रणम्य वहुधा विधिः ।। 517

कृताञ्जलिपुटो भूत्वा न्यवसन्नतकन्धरः ।

**विष्णुरुवाच** -

महेशानन्ताद्यत्रिगुणरहितामेय विमल
स्वराकारापारामितगुणगणाकार गिरिश ।
निराधाराधारामरवर निराकार परम
प्रभापूराकाराचरपर नमोऽवेद्य शिव ते ।। 518

नमो वेद्यावेद्याखिलजगदुपादाननियत
स्वतन्त्रा सामंता नव धृत निकाराकारविरत(?)।

निवर्तन्ते वाचः शिवमजरमप्राप्य मनसा
यतोऽशक्तास्स्तोतुं सकृदपि गुणातीत शिव ते ।। 519

त्वदन्यं(द्)वस्त्वेकं न हि भुवि समस्तं न भवतो-
विभिन्नं विश्वात्मन् न च परममस्त्वीश भवतः ।
ध्रुवं मायातीतस्त्वमसि सततं नात्र विशयः
कृतं कृत्यं किञ्चित्क्वचिदपि नमो वास्तु शिव ते ।।

(त्वमेवदंलो) त्वमेवेदम्लोके निखिलममलं व्याप्य सततं
तथैवान्यं लोकं स्थिमनघ देवोत्तम विभो ।
त्वयैवैतत्सृष्टं जगदखिलमीशान भगवन्
विलासोऽयं कश्चित्तव शिव नमोऽमेय शिव ते ।। 521

जगत्सृष्टं पूर्वं शिव-यदिदमुमाकान्त सततं
त्वया लीलामात्रात्तदपि सकलं रक्षितमभूत् ।
तदेवाग्रे फालप्रकटनयनाग्न्युद्भूतकणैः
स्वयं दग्ध्वा स्थास्यस्यज हर नमोऽवेद्य शिव ते ।। 522

विभूतीनामन्तो भव न भवतो भूतिविलस-
न्निजाकार श्रीमन् न तव गुणसीमाप्यवगता ।
अतद्व्यावृत्त्याद्य त्वयि सकलवेदाश्च चकिताः
भवन्त्येवासामप्रकृतिश नमो वर्ण्य शिव ते ।। 523

विराड्रूपं यत्ते सकलनिगमागोचरभभू-
तदेवं रूपं ते भवति किमिदं भिन्नमथवा ।
न जाने देवेश त्रिणयन सुराराध्यचरण
त्वमोङ्कारो वेदस्त्वस्मसि हि नमोऽघोर शिव ते ।। 524

यदन्तस्त्वज्ञानान्मुनिवरगणा रूपमनघं
तदेवं सञ्चिन्त्य स्वमनसि सदा सङ्गविहिताः ।
ययुर्दिव्यानन्दं तदिदमथवा किन्तु न तथा
किमेतज्जानेऽहं शरणमगमं शर्व शिव ते ।। 525

यया शक्त्या सृष्ट्वा जगदथ च संरक्ष्य वहुधा
ततः संहृत्यैतन्निवससि तदाधारमथवा ।
इदं ते किं रूपं निरुपम न जाने हर विभो
निसर्गः कोवा ते तमपि हि नमो भव्य शिव ते ।। 526

तवानन्तान्याहुः शुचिपरमरूपाणि निगमा-
स्तदन्तस्थं यत्तत्सदसदनिरुक्तं स्थिरमपि ।
निरुक्तं छन्दोभिर्निलयनमिदं चा निलयनं
न विज्ञातं ज्ञातं सकृदपि नमो ज्येष्ठ शिव ते ।। 527

तवाभूत्सत्यत्वानृतमपि च सत्यं कृतमभूत्
ऋतं सत्यं सत्यं कृतमुभयथारूपकमलम् ।

यतःसत्यं सत्यं सममपि समस्तं तव विभो
अतः सत्यं सत्यं कृतमपि नमो रुद्र शिव ते ।। 528

तवाहारं हारं विदितमपि हारं विहरसे
नवाहारं हारं हरसि हर हारं न हरसि ।
नवाहारं हारं परतरविहारं परतरं
परं पारं जाने न हि नहि नमो विश्व शिव ते ।। 529

यदेतत्तत्वं ते सकलमपि तत्त्वेन विदितं
न तत्तत्वं तत्वं विदितमपि तत्त्वेन विदितम् ।
न चैतत्तत्वं नेन्नियतमपि तत्वं किमु भवे-
न्न ते तत्वं तत्वं परतर नमो धिष्ण्य शिव ते ।। 530

इदं रूपं रूपं सदसदमलं रूपमिति चे-
न्न जाने रूपं तत्तरतमविभिन्नं पदतरम् ।
यतो नान्यद्रूपं निरतमपि वेदैर्निगदितं
न जाने सर्वात्मन् क्वचिदपि नमोऽनन्न शिव ते ।। 531

महद्भूतं भूतं यदपि च भूतं तव विभो
सदा भूतं भूतं किमुत भवतो भूतविषयैः ।
यदा भूतं भूतं भवति च न भूतं च भवतु
प्रभाभूतं भूतं भवति हि नमो यष्ट शिव ते ।। 532

वशीभूता भूताः सतमपि भूतात्मकतया
न भूता भूतास्ते तव यदपि भूता विभुतया ।
यतो भूता भूतास्तव तु न हि भूतात्मकतया
न वा भूता भूता क्वचिदपि नमो भूत शिव ते ।। 533

न ते माया माया सततमपि मायामयतया
ध्रुवं माया मय्या त्वयि वर न मायामयमपि ।
यदा माया माया न खलु- -सा माययतया
न माया माया या परमियमतस्ते शिवमया ।। 534

यदन्तःसंवेद्य विदितमपि वेदैर्न विदितं
न वेद्यं वेद्यं चेन्नियतमपि वेद्यं न विदितम् ।
तदेवेदं वेद्यं विदितमपि वेदान्तनिकरैः
करावेद्यं वेद्यं जित मिति नमोऽतर्क्य शिव ते ।। 535

शिवं शैवं भावं शिवमपि शिवाकारमशिवं
न सत्यं शैवं तच्छिवमिति शिवं शैवमनिशम् ।
शिवं शान्तं मत्वा शिवपरमतत्वं शिवमयं
न जाने तत्तत्वं शिवमिति नमोऽभेद्य शिव ते ।। 536

यदज्ञात्वा तत्वं सकलमपि संसारपतितं
जगज्जन्मावृत्तिं वहति सततं दुःखनिलयम् ।

तदेतज्ज्ञात्वैवावहति च निर्वृत्तिं परतरां
न जाने तत्तत्वं परमिति नमो रेष्म्य शिव ते ।। 537

तवेदं यद्रूपं निगमविषयं मङ्गलकरं
न दृष्टं केनापि ध्रुवमिति विजाने शिव विभो ।
ततश्चित्ते शम्भो नहि मम विशदेऽतोद्यविकृतिः
प्रयत्नाल्लभ्येऽस्मिन्न किमपि नमः पूर्ण शिव ते ।। 538

तवाकर्णं गूढं यदपरमचक्षुः श्रुतिपरं
तदेवापादं सन्नयनपदवीं नात्र तनुते ।
(कदा)कदाचित्किञ्चिद्वा स्फुरतु कृपया चेतसि तव
स्फुरद्रूपं भव्यं भवहर नमो नाद्य शिव ते ।। 539

त्वमिन्दुर्भानुस्त्वं हुतभुगसि वायुश्च सलिलं
त्वमेवाकाशोऽसि क्षितिरसि तथात्मासि भगवन् ।
ततः सर्वाकारस्त्वमसि भवतो भिन्नमणु च
न तत्सत्यं सत्यं त्रिणयन नमोऽनन्त शिव ते ।। 540

विधुं धत्से नित्यं शिरसि मृदु कण्ठेऽपि गरलं
नवं नागा हारा भसितममलं भासुरतनौ ।
करे शूलं फाले ज्वलनमनिशं तत्किमिति ते
न तत्वं जानेऽहं भवहर नमः कूप्य शिव ते ।। 541

तवापाङ्गस्यन्दो यदि भवति भव्यः शुभकरः
  कदाचित्कस्मिंश्चिल्लघुतरनरेऽपि प्रभवति ।
स एवैतल्लोकान् विरचितुमल्पोऽपि स महान्
  कृपाधारायत्तो सुखकर नमोऽनन्त शिव ते ॥ 542

भवन्तं देवेशं शिवमितरगीर्वाणसदृशं
  प्रमादाद्यः कश्चिद्यदि वदति चित्तेऽपि मनुते ।
स दुःखं लब्ध्वाऽन्ते नरकमपि याति ध्रुवमिदं
  ध्रुवं दैवाराध्यामितगुण नमोऽनन्त शिव ते ॥ 543

प्रदोषे रत्नाढ्ये मृदुलतरसिह्मासनवरे
  भवानीमारूढामसकृदपि संवीक्ष्य भवता ।
कृतं सम्यङ् नाट्यं प्रथितमिति वेदोऽपि वदति
प्रभावः को वाऽयं तव हर नमो दीप्य शिव ते ॥ 544

स्मशाने सञ्चारस्तव किल न ते क्वापि गमनं
  यतो विश्वं व्याप्याखिलमपि सदा तिष्ठति भवान् ।
विभुं नित्यं शुद्धं शिवमथमतो व्यापकमिति
  श्रुतिः साक्षाद्वक्ति स्वयमपि नमः सूद्य शिव ते ॥ 545

धनुर्मेरुः शेषोऽप्यथ वरगुणो यानमवनि-
  स्तवेनेन्दू चक्रे निगमनिकरा वाजिनिकराः ।

पुरो लक्ष्यं यन्ता विधिरिषुरहं चेति निगमः
किमेवं त्वय्येषो निगदति नमःपर्ण्य शिव ते ॥ 546

मृडं सत्वोपेतं भवमनतिरिक्तं च रजसा
तमोयुक्तं शुद्धं शिवमपि शिवं निष्कलमिति ।
वदत्येषो (वं) वेदस्त्वमसि तदुपास्यं ध्रुवमिदं
त्वमोङ्काराकारो ध्रुवमिति नमोऽनन्त शिव ते ॥ 547

जगत्सुप्तिं बोधं व्रजति भवतो निर्गतमपि
प्रवृत्तिं व्यापारं पुनरपि सुषुप्तिं च सकलम् ।
त्वदन्यं त्वत्प्रायं व्रजति शरणं नेति निगमो
वदत्यद्धा सर्वं शिवमिति नमःस्तुत्य शिव ते ॥ 548

त्वमेको लोकानामधिपतिरुमानाथ जगतां
शरण्यः प्राप्यस्त्वं जलनिधिरिवानन्तपयसाम् ।
त्वदन्यो निर्वाणं न वितरति निर्वाणपतिर-
प्यतः सर्वोत्कृष्टस्त्वमसि हि नमो नीप्य शिव ते ॥ 549

तवैवांशो भानुस्तपति विधुरप्येति पवनः
पवत्येषो वह्निर्ज्वलति सलिलं चापि वहति ।
त्वदाज्ञाकारित्वं सकलसुरवर्गस्य सततं
त्वमेकःस्वातन्त्र्यं वहसि हि नमोऽनन्त शिव ते ॥ 550

स्वतन्त्रोऽयं सोमः सकल भुवनैकप्रभुरयं
नियन्ता देवानामयमिह नियन्ताऽस्य न परः ।
शिवःसिद्धोऽपायाद्रहित इति वेदोऽपि वदति
स्वयं त्वामाशास्यं भयहर नमो रथ्य शिव ते ।। 551

नमो रुद्रानन्तानघ हर नमः श्रीधर विभो
नमो गौरीनाथ त्रिणयन शरण्याङ्घ्रिकमल ।
नमः शर्व श्रीमन्ननघमहदैश्वर्यनिलय
स्मरारे पापारे जय जय नमः शोच्य शिव ते ।। 552

महादेवामेयानघगुणगणग्राम सततं
नमो भूयोः भूयः पुनरपि नमस्ते पुनरपि ।
पुराराते शम्भो पुनरपि नमस्ते शिव शिव
नमो भूयोभूयः शिव शिव नमोऽनन्त शिव ते ।। 553

कदाचिद्गण्यन्ते निबिडनिपतद्वृष्टिकणिकाः
कदाचिन्नक्षत्राण्यपि सिकतलेशाः कुशलिभिः ।
अनन्तैराकल्पं शिवगुणगणांश्चारुरसनै-
र्नशक्यन्ते नूनं गणयितुमुषित्वापि सततम् ।। 554

मयाऽविज्ञायेशानिशमपि कृता ये तु मनसा
सकामेनामेयाः सततमपराधा बहुविधाः ।

त एव(त्वयैव)क्षन्तव्याः क्वचिदपि शरीरेण वचसा
कृता नैते नूनं शिव शिव कृपासागर विभो ॥ 555

प्रमादाद्येकेचिद्विततमपराधा विधिहता
कृताः सर्वे तेऽपि प्रशममुपयान्तु स्पुटतरम् ।
शिव श्रीमन् शम्भो शिव शिव महेशेति च जपन्
क्वचिल्लिङ्गाकारे शिव हर वसामि स्थिरतरम् ॥ 556

इति स्तुत्वा शिवं विष्णुः प्रणम्य च मुहुर्मुहुः ।
निर्विण्णो न्यवसत्तत्र कृताञ्जलिपुटश्चिरम् ॥ 557

सदाशिवःशिवं भूयः आदायोवाच सर्वगः :
भीषयन्नखिलान् भूतान् घनगम्भीरया गिरा ॥ 558

मदीयं रूपममलं कथं ज्ञेयं भवादृशैः ।
यन्न वेदैरपि ज्ञातमित्युक्त्वान्तर्दधे शिवः ॥ 559

ततः पुनर्विधिस्तत्र तपस्तप्तुं समरभे (?) ।
विष्णुश्च शिवतत्वस्य ज्ञानार्थमतियत्नतः ॥ 560

तादृशं शिवमेवार्च्यं पूजयित्वा वसाम्यहम् ।
नान्यो ममार्च्यो देवेषु विना शम्भुं सनातनम् ॥ 561

त्वयापि शाङ्करं लिङ्गं पूजनीयं प्रयत्नतः ।
विहायैवान्यदेवानां पूजनं तेषु सर्वदा ॥ 562

इत्युक्तःशैववर्यं तं सम्पूज्य भुजगाधिपः ।
काशीं प्राप स तेनैव सहपूजापुरःसरम् ॥ 563

शैवः पाशुपताचारः पुनः पशुपतीश्वरम् ।
दृष्ट्वा सन्तोषमापन्नस्तत्रैवोवास सादरम् ॥ 564

एतन्मया पशुपतीश्वरसन्निधान-
वासस्य सम्यगमलं फलमुक्तमद्य ।
सेयं कथा सकलपापवनाग्निभूता
श्राव्या सुधारसमयी शिवभक्तवर्यैः ॥ 565

॥ इति श्रीशिवरहस्ये सप्तमांशे शीवगौरीसंवादे
काशीमाहात्म्ये पशुपतीश्वरेतिहासकथनं नाम
दशमोऽध्यायः ॥



## ॥ एकादशोऽध्यायः ॥

श्रीशिव उवाच -

ओङ्कारं नाम विमलं क्षेत्रं काश्यां वरानने ।
सर्वपापक्षयकरं तिष्ठत्येकं शुभप्रदम् ॥ 1

तत्र बिल्ववनं रम्यं नित्यं नवदलान्वितम् ।
नक्षत्रलेढिशाखाढ्यं घनच्छायमभूच्छिवे ॥ 2

तस्मिन् बिल्ववने रम्ये क्रीडार्थं र(ग)म्यते मया ।
किञ्चित्कालं विहृत्याहं वसामि प्रत्यहं शुभे ॥ 3

विद्यमाने मयि प्रीत्या कदाचित्पवनो महान् ।
समागतस्ततस्तेन कम्पितास्तरवो भृशम् ॥ 4

कम्पितं न्यपतद्भूमौ बिल्वशाखाग्रमुत्तमम् ।
नवारुणदलाक्रान्तं वितस्तिमितमम्बिके ॥ 5

तद्गृहीतं मया रम्यं तदाप्रभृति सर्वदा ।
तद्बिल्ववनरक्षार्थं यक्षाः संस्थापिता मया ॥ 6

वेदा मूर्तिधरास्तत्र नवबिल्वदलैः शुभैः ।
ओङ्काररूपिणं नित्यं मामेवाभ्यर्चयन्ति हि ॥ 7

शिवतत्वमविज्ञाय ज्ञानार्थं च मुनीश्वराः ।
वेदाश्च सततं तत्र तपः कुर्वन्ति सादरम् ।। 8

तत्र पञ्चाग्निनिरताः निराहारा जितेन्द्रियाः ।
तपो घोरतरं कृत्वा तिष्ठन्ति विमलाशयाः ।। 9

एकपादेन संस्थाय प्रज्वलद्वह्निमध्यगः ।
चकार विष्णुरत्रैव तपो घोरतरं पुरा ।। 10

ब्रह्मणापि तपस्तप्तं महाघोरतरं मुदा ।
इन्द्रादिभिर्लोकपालैस्तपस्तप्तमिहैव हि ।। 11

अन्यैश्च ऋषिभिः सिद्धैर्मुनिभिर्ब्रह्मवादिभिः ।
तपस्तप्तुं पुरा नित्यमत्रैवोङ्कारसन्निधौ ।। 12

सायमोङ्कारनाथस्य दर्शनं पापनाशनम् ।
कर्तव्यं नियतं यत्नात्पूजा कार्या निरन्तरम् ।। 13

प्रतिशुक्लचतुर्दश्यां पूजा कार्या विशेषतः ।
तत्प्रीत्यर्थं महाशैवा भोजनीयाः प्रयत्नतः ।। 14

ओङ्कारकुण्डममलं तत्र तिष्ठति निर्मलम् ।
तत्र प्रतिदिनं स्नानं कर्तव्यं प्रीतिवृद्धये ।। 15

तत्र श्राद्धं च कर्तव्यं पितॄनुद्दिश्य सादरम् ।
कर्तव्यं तत्र यत्नेन प्रत्यहं तिलतर्पणम् ।। 16

तत्र श्राद्धे कृते सर्वे पितरो नरकस्थिताः ।
प्रयान्ति ब्रह्मसदनं मोदमाना वसन्ति च ॥ 17

पुरा केनचिदत्रैव कृतं श्राद्धं यथाविधि ।
तेन तत्पितरः सर्वे नरकाद्गन्तुमुद्यताः ॥ 18

तदा यमभटाः सर्वे यमशासनकारिणः ।
प्रगृह्यैव पितॄन् सर्वान्ययुर्यमनिकेनम् ॥ 19

**यमभटा ऊचुः -**

प्रयान्ति नरकादेते यम भीमपराक्रम ।
विचारयैतानिति ते यममूचुर्यमस्ततः ॥ 20

उवाच चित्रगुप्ताख्यं धर्माधर्मविचारकम् ।
किमेतैः कृतमस्तीति बभाषे वचनं मुदा ॥ 21

**चित्रगुप्त उवाचः -**

काश्यामोङ्कारनाथस्य कुण्डे पापौघनाशके ।
शैवेन तद्वंशजेन कृतं श्राद्धं यथाविधि ॥ 22

कृतं पिण्डप्रदानं च तर्पणं च तिलैः कृतम् ।
तेन वै घोरनिरयादुद्धृताः पितरोऽखिलाः ॥ 23

आब्रह्मकल्पमनिशं ब्रह्मणा पूजिता मुदा ।
ब्रह्मलोके निवासं च करिष्यन्ति न संशयः ।। 24

इति तद्वचनं श्रुत्वा यमः शीघ्रं समुत्थितः ।
प्रत्येकमासनं दत्वा पूजां चक्रे यथाविधि ।। 25

ततो विमानमारुह्य ब्रह्मलोकं ययुर्मुदा ।
इन्द्रेण पूजिताः सम्यक्तथा दिक्पालपूजिताः ।। 26

अभ्यागतान् पितॄन् दृष्ट्वा सम्पूज्य विधिवद्विधिः ।
स्वर्लोके विमलान्सर्वान् स्थापयामास सादरम् ।। 27

अतोऽत्र विधिवच्छ्राद्धं कर्तव्यं पितृमुक्तये ।
ओङ्कारेशार्चनं चात्र कर्तव्यं प्रतिवासरम् ।। 28

त्रिलोचनाख्यममलं क्षेत्रं काश्यां वरानने ।
तिष्ठत्येकं ममात्यन्तऽविलासास्पदमुत्तमम् ।। 29

हेमप्राकारशृङ्गाढ्यं राजमानमहर्निशम् ।
किन्नरामरगन्धर्वसेवितं प्रतिवासरम् ।। 30

पिल..पिलाख्यं तत्रास्ति कुण्डमेकं वरानने ।
तत्र स्नात्वा यथाशास्त्रं श्राद्धं कृत्वा यथाविधि ।। 31

त्रिलोचनाख्यलिङ्गस्य पूजा कार्या यथाविधि ।
पुष्पैर्नानाविधैर्द्रव्यैर्बिल्वपत्रैस्तिलाक्षतैः ।। 32

शनित्रयोदशी देवि भविष्यति यदा तदा ।
तस्मिन् पिल..पिले कुण्डे स्नानं कार्यं प्रयत्नतः ।। 33

तर्पयित्वा पितॄन् सर्वान् प्रदोषे समुपस्थिते ।
त्रिलोचनेश्वरं सम्यगभिषिच्य शुभोदकैः ।। 34

गन्धैस्तिलाक्षतैः पुष्पैर्बिल्वपत्रैश्च कोमलैः ।
पूजयित्वा विधानेन धूपदीपादिभिः क्रमात् ।। 35

सव्यासव्यविधानेन ततः कार्यं प्रदक्षिणम् ।
प्रणम्य बहुधा सम्यक्स्तुत्वा स्तोत्रैरनेकधा ।। 36

स्वगृह्योक्तप्रकारेण प्रतिष्ठाप्य हुताशनम् ।
परमान्नं गोघृतं च सम्पाद्य नवमादरात् ।। 37

तथा बिल्वसमिद्बिल्वदलान्यानीय सादरम् ।
होमः कार्यः प्रयत्नेन ऋत्विग्भिः सह वैदिकैः ।। 38

मोक्षार्थिभिः सार्धकोटिहोमः कार्यो यथाविधि ।
पुत्रार्थिभिः सार्धलक्षहोमः कार्यो यथाविधि ।। 39

विद्यार्थिभिस्त्रिलक्षं तु होमः कार्यो यथाविध ।
स्वर्गार्थिभिस्तु कार्यः स्याद्धोमो लक्षचतुष्टयम् ।। 40

एवं हुत्वा हविः सम्यग्दत्वा चैवाथ दक्षिणाम् ।
कृतं होमदिकं सर्वं शिवाय विनिवेदयेत् ।। 41

भोजनीयास्ततो विप्रा यथेच्छं स्वादुभोजनैः ।
सुवासिन्यो भोजनीया देवप्रीत्यर्थमादरात् ॥ 42

विध्युक्तेन प्रकारेण कृतहोमादिना शिवः ।
प्रीतोऽभीष्टं यथा योग्यं प्रयच्छति न संशयः ॥ 43

शनित्रयोदशीं प्राप्य काश्यां स्थित्वा त्रिलोचनम् ।
यो नार्चयति मूढात्मा स भवत्यघसंश्रयः ॥ 44

उपोष्य सायमनघैः स्नात्वा तत्र त्रिलोचनः ।
शनियुक्तत्रयोदश्यां पूजनीयः प्रयत्नतः ॥ 45

पुरा कश्चिद् द्विजशिशुर्दरिद्रो व्याधिपीडितः ।
शनित्रयोदशीं प्राप्य चकारोपोषणं मुदा ॥ 46

ततः पिलिप्पिलाकुण्डे स्नात्वा बिल्वदलैर्जलैः ।
पूजां कृत्वा प्रणम्याथ ननर्त च पुनः पुनः ॥ 47

ततः पर्णकुटीं प्राप्य निद्रां चक्रे स बालकः ।
त्रिलोचनोऽपि सन्तुष्टस्तद्बालकृतपूजनात् ॥ 48

सर्वाभरणसम्पन्नो दिव्यमङ्गलविग्रहः ।
प्रत्यक्षोऽभूत्कृपासिन्धुस्तमुवाच द्विजार्भकम् ॥ 49

प्रीतोऽस्मि पूजनाद्वत्स वरं वृणु तवेप्सितम् ।
वरदोऽहं वरं दास्ये मा भैषीर्धैर्यमावह ॥ 50

इत्युक्तो बालकः शीघ्रं ययाचे वरमुत्तमम् ।
देव देहि ममानन्दमविच्छिन्नमनामयम् ॥ 51

जन्मादिदुःखं शमय गर्भवासं विनाशय ।
देहि मुक्तिं कृपासिन्धो त्रिलोचन जगत्प्रभो ॥ 52

इत्युक्त्वा प्रणिपत्येशं देवदेवं मुहुर्मुहुः ।
कृताञ्जलिपुटो भूत्वा न्यवसन्नतकन्धरः ॥ 53

ततस्तस्मै महादेवः कृपाब्धिर्भक्तवत्सलः ।
गाणापत्यं ददौ प्रीतः स एवाहं त्रिलोचनः ॥ 54

कृत्तिवासेश्वरं नाम क्षेत्रमस्त्येकमुत्तमम् ।
तत्रापि बिल्वतरवस्तिष्ठन्ति नवपल्लवाः ॥ 55

तत्रापि मुनयः शान्ता निराहारा जितेन्द्रियाः ।
तिष्ठन्त्यत्यन्तसन्तुष्टाः शिवध्यानपरायणाः ॥ 56

अधोमुखा धूम्रपानं केचित्कुर्वन्ति सादरम् ।
केचिदेकाङ्घ्रिणा स्थित्वा तपः कुर्वन्त्यनाकुलाः ॥ 57

केचिदभ्यर्च्य मामीशं नृत्यं कुर्वन्ति यत्नतः ।
केचिल्लिङ्गार्चनं कृत्वा प्रणमन्ति पुनः पुनः ॥ 58

केचिन्मां हृदि संस्थाप्य ध्यानं कुर्वन्ति सादरम् ।
केचिद्गायन्ति सततं शिवनामानि पावनाः ॥ 59

तत्रापि कुण्डमस्त्येकं सन्निधौ कृत्तिवाससः ।
स्नानं प्रयत्नतः कार्यं तस्मिन्कुण्डे शुभावहे ।।

तत्र स्नात्वा विधानेन कृत्तिवाससमर्चयेत् ।
तत्तु मोक्षप्रदं लिङ्गं दर्शनादघनाशनम् ।।

मुक्तिकामैर्मुनीन्द्रैस्तु सर्वदा सेवितं मुदा ।
मुनिभिः संस्तुतं नित्यं स्तुतं देवैश्च सर्वदा ।।

माघकृष्णचतुर्दश्यामुपोष्य नियतेन्द्रियः(यैः) ।
तत्र जागरणं कार्यं सन्निधौ कृत्तिवाससः ।।

प्रतियामं यथायोग्यं पूजा कार्या प्रयत्नतः ।
दीपप्रदानं कर्तव्यं गोघृतेन मनोहरम् ।।

नवबिल्वदलैः शुद्धैः पूजा कार्या विशेषतः ।
उपोष्यात्राप्रमादेन लिङ्गपूजापरायणैः ।।

सर्वघोराघशान्त्यर्थं कोटिजन्मतपोऽधिकम् ।
सम्यग्जागरणं कार्यं तद्दिने समुपस्थिते ।।

शिवरात्रिव्रतं यस्तु मोहेन न करिष्यति ।
स्वधर्मप्रच्युतो नित्यं नरके निवसिष्यति ।।

पुरा हिमालयप्रान्ते कश्चिदासीन्नराधिपः ।
तेन रम्याः शिवकथाः श्रुताः सर्वा मुदावहाः ।।

शिवरात्रिव्रतस्यास्य माहात्म्यं श्रुतमेकदा ।
तत्रैव संश्रुतं चापि माहात्म्यं कृत्तिवाससः ।। 69

ततः काशीप्रयाणार्थमुद्युक्तोऽभून्नराधिपः ।
ततो विघ्नो महानासीत्तद्यात्राप्रतिबन्धकः ।। 70

ततो विघ्नविनाशार्थं स राजा दृढनिश्चयः ।
तपः कर्तुं समारेभे तत्रैव गिरिशालये ।। 71

ज्वलत्पञ्चाग्निमध्यस्थो निराहारो जितेन्द्रियः ।
शिवलिङ्गार्चनं कुर्वन् चकारोग्रं तपो नृपः ।। 72

स लक्षयुगपर्यन्तं कृत्वा घोरतरं तपः ।
ततो दुःखेन सन्तप्तस्त्यक्त्वा निर्विण्णमानसः ।। 73

रुरोदोच्चैरतिक्लिन्नः शिरःसन्ताड्य पाणिना ।
पाषाणमपिसङ्गृह्य ताडयन्नुरसस्स्थलम् ।। 74

कथं काशी मया प्राप्या द्रक्ष्यो विश्वेरः कथम् ।
कृत्तिवासेशलिङ्गं च कथं द्रक्ष्याम्यतः परम् ।। 75

प्रायः पर्वतसङ्काशान्यतिघोराणि सन्ति मे ।
पातकानि बहून्येवं किं कर्तव्यमतः परम् ।। 76

इति कृत्वा महादुःखं तपश्चक्रे पुनर्नृपः ।
सहस्रयुगपर्यन्तं जलमध्यगतस्तदा ।। 77

ततः कदाचित्तद्धैर्यं द्रष्टुकामश्चतुर्मुखः ।
वृद्धब्राह्मणरूपेण गतस्तन्निकटे शुभे ॥

तमागतं द्विजं दृष्ट्वा प्रणम्य द्विजसत्तमम् ।
चकार विधिवत्पूजामुवाच च वचस्तदा ॥

वेदशास्त्राश्रय श्रीमद्द्विजवर्याघनाशन ।
काशीप्राप्तिकरं पुण्यं किमस्ति वद तत्त्वतः ॥

**ब्राह्मण उवाचः -**

राजन् राज्ञा त्वया धर्मो न भविष्यति सर्वथा ।
किन्तु कर्तव्यमनिशं प्रजानां परिपालनम् ॥

निष्कण्टकमिदं राज्यं त्यक्त्वा किं तप्यते तपः ।
इदानीमखिलं राज्यं नष्टमेव भविष्यति ॥

शरीरं चाभवत्क्षीणं नृपवर्य मनोहरम् ।
काशीप्राप्तिकरं घोरं तपः कर्तुं न शक्यते ॥

अनेकजन्मनामन्ते कृत्वा कृत्वा तपो मुहुः ।
अन्ते शिवप्रसादेन सा काशी दृश्यते जनैः ॥

क्व भवान् क्व तपो घोरं तादृशं शिवतुष्टिदम् ।
क्व मानुषमिदं रूपं क्व काशीप्राप्तिसाधनम् ॥

मौर्ख्यं मा कुरु राजेन्द्र त्यज व्रतमतः परम् ।
पालयस्व प्रजाः सर्वाः धर्मेणैव परन्तप ।। 86

इति तद्वचनं श्रुत्वा धैर्यवानमितप्रभुः ।
विप्रं विसृज्य भूयोऽपि तपस्तेपे दुरासदम् ।। 87

स लक्षयुगपर्यन्तमेकपादेन संस्थितः ।
चकार दुःसहं घोरं तपो मत्प्रीतिसाधनम् ।। 88

ततश्च मत्प्रसादेन निवृत्ता विघ्नराजयः ।
ततः काशीं ययौ राजा हृष्टान्तःकरणः शुभे ।। 89

तेन घोरतरं तप्तं पूर्वपूर्वभवेष्वपि ।
बहुकालं प्रयत्नेन काशीप्राप्त्यर्थमादरात् ।। 90

काश्यां विशेषतीर्थेषु स्नात्वा प्रत्यहमादरात् ।
नित्ययात्रादिकं कृत्वा न्यवसन्नियतेद्रियः ।। 91

ततस्तत्रैव निवसन्माघकृष्णचतुर्दशीम् ।
संप्राप्य परमं लेभे सन्तोषं नृपतिः सदा ।। 92

ततस्तु नृपतिस्तस्मिन् शिवरात्रिदिने शुचिः ।
कृत्वा यात्रादिकं सर्वमुपोष्य नियतव्रती ।। 93

पूजोपकरणं सर्वं सम्पाद्य दृढमानसः ।
कृत्तिवासेश्वरं सम्यक् संपूज्य विधिपूर्वकम् ।। 94

कृष्णगोघृतदीपांश्च चकार स मनोहरान् ।
तद्दीपप्रभया लोकाः दीपिताः सर्व एव हि ॥ 95

स्तोत्रपाठैश्च नृत्तैश्च पुराणश्रवणादिभिः ।
चक्रे जागरणं राजा कृत्तिवासेशमर्चयन् ॥ 96

ततस्तत्रैव पूतात्मा शिवलिङ्गार्चने रतः ।
पञ्चाग्निमध्यदेशस्थश्चकारोग्रं तपो नृपः ॥ 97

कालेन स मृतः सोऽपि ममाङ्के सन्निवेशितः ।
मया पञ्चाक्षरो दत्तो मुक्तिमाप नृपोत्तमः ॥ 98

सर्वार्थसाधकं क्षेत्रमीदृशं कृत्तिवाससः ।
तत्रान्वहं पूजनार्हकृत्तिवासेश्वरो जनैः ॥ 99

तत्प्रान्ते सन्ति लिङ्गानि कोटिशः कमलानने ।
तान्यप्येतानि दृश्यानि सर्वमुक्तिकराणि च ॥ 100

तीर्थमस्त्येकममले ऋणमोचन्नामकम् ।
तत्तीर्थस्नानमात्रेण ऋणेभ्यो मुच्यते जनः ॥ 101

तत्र श्राद्धं विधानेन कर्तव्यं यत्नतः शुभे ।
तेन मुक्ता भवन्त्येव पितृणानृणबन्धनात् ॥ 102

पिशाचमोचनं नाम तीर्थमस्त्येकमुत्तमम् ।
तत्र स्नात्वा पिशाचोऽपि मुच्यते सर्वपातकैः ॥ 103

श्राद्धं च विधिवत्तत्र कर्तव्यमतियत्नतः ।
पिशाचभूताः सर्वेऽपि मुच्यन्ते पितरस्ततः ।। 104

तत्रापि सन्ति लिङ्गानि भक्ताभीष्टप्रदानि च ।
पूजनीयानि यत्नेन काशीक्षेत्रनिवासिभिः ।। 105

तदग्रे यातनास्तम्भो योजनार्बुदमुन्नतः ।
जाज्वल्यमानः सततं तिष्ठत्यनलसन्निभः ।। 106

काश्यां तिष्ठन्ति ये मर्त्याः पातकादपराङ्मुखाः ।
तानग्निशृङ्खलैर्बध्वा पाचयत्यतिभैरवम् ।। 107

नित्यान्तर्गृहयात्रादिविमुखान्शिवनिन्दकान् ।
दह्यमानानलस्तम्भे पाचयत्यत्र भैरवः । 108

अन्तर्गृहे मलादीनि विसृजन्यो वसेन्नरः ।
तमानीयात्र बध्वैव पाचयत्यत्र भैरवः ।। 109

जाज्वल्यमानान्यनिशं वह्निकुण्डानि सन्ति च ।
तेषु पातयति क्रूरः स्नानायानीय भैरवः ।। 110

तप्ततीक्ष्णासिकुण्डानि घोराणि विविधानि च ।
तिष्ठन्ति तेषु तानेव पाचयिष्यति भैरवः ।। 111

मामनभ्यर्च्य यो भुङ्क्ते काश्यां स्थित्वापि मानवः ।
तमानीयात्र तीव्रेण पातयिष्यति भैरवः ।। 112

काश्यां कृतानि पापानि वृद्धिं यान्ति क्षणे क्षणे ।
तन्नाशो न भवत्येव विना तादृशयातनाम् ।।

विविधा यातनाः सृष्टा भैरवेण यदृच्छया ।
तासु तान् क्रोधसंसृष्टः पातयत्येव भैरवः ।।

द्वात्रिंशद्युगपर्यन्तमेकैकाघफलं जनैः ।
काश्यामवश्यं भोक्तव्यं काश्यां तु कृतपातकैः ।।

भ्रमेणाप्येकदा त्यक्त्वा मूत्रमन्तर्गृहे नरः ।
त्रिकोटियुगपर्यन्तमग्निकुण्डे पतिष्यति ।।

पुरीषोत्सर्जकस्यैतस्त्रिगुणं विधिचोदितम् ।
इतोऽप्यधिकमेवात्र भैरवस्तु करिष्यति ।।

प्रमादेन कदाचिच्चेदेवंस्याद्यातना शुभे ।
नोचेन्नित्यं विसृजतो मलादीनि न निष्कृतिः ।।

घोराणि यातनास्थानान्यनेकानि वरानने ।
तद्यातनास्तम्भपार्श्वे तिष्ठन्ति कठिनानि हि ।।

द्रष्टुं न शक्यते घोरं यातनास्थलमीदृशम् ।
सा यातना कथं सह्या बहुदुःखप्रदायिनी ।।

प्रज्वलद्यातनास्तम्भं दूरे दृष्ट्वैव केचन ।
बहिः पलायने यत्ता हाहाहेति रुदन्ति च ।।

सहस्रबाहवः केचित् केचित्करशतान्विताः ।
केचिल्लक्षकराः क्रूराः कालभैरवकिङ्कराः ॥ 122

हस्तायुतान्विताः केचित् केचित्प्रयुतबाहवः ।
केचित्कोटिकराः क्रूराः केचिन्नियुतबाहवः ॥ 123

केचित्खर्वायुतकराः केचिदर्बुदबाहवः ।
केचिन्महाखर्वहस्ताःकेचिच्चामितबाहवः ॥ 124

सर्वेऽपि पर्वताकारा वीर्यमानमदोन्नताः ।
घनोन्नतोर्ध्वविषमतीक्ष्णदाहोरुबाहवः ॥ 125

सन्नद्धाः सर्वदा भीमाः शूरा भैरवकिङ्कराः ।
इदृशाद्भुतदूतानां सङ्ख्या कर्तुं न शक्यते ॥ 126

यावन्तो बहवो यस्य (येषां) नानाशस्त्रान्विताः सदा ।
तावद्भिर्बाहुभिर्दूता निघ्नन्त्येकैकमुद्धताः ॥ 127

तद्यातनास्थलं दृष्ट्वा ब्रह्मविष्ण्वादयः सुराः ॥
रुदन्तः कम्पमानाश्च तिष्ठन्ति स्वस्वधर्मतः ॥ 128

काश्यां येन कृतं पापं तेनेयं घोरयातना ।
भोक्तव्या नात्र सन्देहः सत्यमेवोच्यते मया ॥ 129

अन्तर्गृहे मलादीनि ये कुर्वन्ति नराधमाः ।
ते यातनाधिकां क्रूरां प्राप्नुवन्ति नराधमाः ॥ 130

ब्रह्महत्यादिकं काश्यां ये कुर्वन्ति नराधमा ।
ते यातनामिमां क्रूरां प्राप्नुवन्ति न संशयः ॥ 131

शिवं शिवतरं काश्यां ये द्विषन्ति नराधमाः ।
ते यातनामिमां क्रूरां प्राप्नुवन्ति न संशयः ॥ 132

ये वै विप्रस्य धिक्कारं काश्यां कुर्वन्ति दुर्जनाः ।
ते यातनामिमां क्रूरां प्राप्नुवन्ति न संशयः ॥ 133

ये शैवं मान्यमनघं नार्चयन्ति नराधमाः ।
ते यातनामिमां क्रूरां प्राप्नुवन्ति न संशयः ॥ 134

काश्यां वसन्ति ये दुष्टाःशिववित्तापहारकाः ।
ते यतनामिमां .... .... .... ॥ 135

ये मामन्यसमं मत्वा काश्यां तिष्ठन्ति शङ्करम् ।
ते यातनामिमां .... .... .... ॥ 136

शिव एव सदा पूज्य इति मां नार्चयन्ति ये ।
ते यातनामिमां .... .... .... ॥ 137

न शिवादधिको देव इति मां नार्चयन्ति ये ।
ते यातनामिमां .... .... .... ॥ 138

शिव एव सुराराध्य इति मां न वदन्ति ये ।
ते यातनामिमां .... .... .... ॥ 139

शिवात्परतरं वस्तु नेति मां नार्चयन्ति ये ।
ते यातनामिमां .... .... .... ॥ 140

ये मामजसनभ्यर्च्य काश्यां तिष्ठन्ति मानवाः ।
ते यातनामिमां .... .... .... ॥ 141

त्यक्त्वा तिष्ठन्ति ये काश्यां भस्मरुद्राक्षधारणम् ।
ते यातनामिमां .... .... .... । 142

ये विहाय वसन्त्यत्र शिवलिङ्गस्य पूजनम् ।
ते यातनामिमां .... .... .... ॥ 143

ये नित्यान्तर्गृहे यात्रां त्यक्त्वा तिष्ठन्ति मानवाः ।
ते यातनामिमां .... .... .... ॥ 144

ये काशीक्षेत्रमनघमन्यक्षेत्रसमं विदुः ।
ते यातनामिमां .... .... .... ॥ 145

ये रुद्रजपमन्यार्थे कुर्वन्ति धनलोभतः ।
ते यातनामिमां .... .... .... ॥ 146

शैवदीक्षां विहायास्यां काश्यां तिष्ठन्ति ये जनाः ।
ते यातनामिमां .... .... .... ॥ 147

रुद्राध्यायजपं त्यक्त्वा तिष्ठन्ति शिवनिन्दकाः ।
ते यातनामिमां .... .... .... ॥ 148

शैवं पञ्चाक्षरजपं त्यक्त्वा तिष्ठन्ति ये जनाः ।
ते यातनामिमां .... .... .... ॥ 149

यत्तु लिङ्गार्चनं त्यक्त्वा तिष्ठन्ति शिवनिन्दकाः ।
ते यातनामिमां .... .... .... ॥ 150

काळभैरवमाराध्यमनाराध्य वसन्ति ये ।
ते यातनामिमां .... .... .... ॥ 151

ये पञ्चक्रोशयात्रां च त्यक्त्वा तिष्ठन्ति मानवाः ।
ते यातनमिमां .... .... .... ॥ 152

ये काश्यां शिवशास्त्रस्य निन्दां कुर्वन्ति दुर्जनाः ।
ते यातनामिमां क्रूरां .... .... .... ॥ 153

अन्यतुल्यतया ये तु शैवं जानन्ति दुर्जनाः ।
ते यातनामिमां .... .... .... ॥ 154

शिवरात्रिव्रतं काश्यां ये न कुर्वन्ति दुर्जनाः ।
ते यातनामिमां .... .... .... ॥ 155

दुष्टप्रतिग्रहासक्ता नित्यं काश्यां वसन्ति ये ।
ते यातनामिमां ... ... ॥ 156

ये शूद्रपतितव्रात्यवित्तपोषितविग्रहाः ।
ते यातनामिमां ... ... ॥ 157

यद्यत्पापकरं कर्म कुर्वन्त्यत्र हि ये जनाः ।
ते यातनामिमां ... ... ॥ 158

इदं मत्वा सदा काश्यां स्वस्वधर्मेण सर्वदा ।
स्थातव्यं यत्नतः सर्वैर्यातनाभीरुभिर्जनैः ॥ 159

अन्तर्गृहे कृतं पापं यन्मलोत्सर्जनार्जितम् ।
मूत्रस्योत्सर्जनं वापि तत्फलं तु सुदुःखदम् ॥ 160

द्वित्रैरन्तर्गृहे पूर्वं मूत्राद्युत्सर्जनं कृतम् ।
तैरिदानीमपि क्रूरा यातना भुज्यते शुभे ॥ 161

शैवोऽप्यन्तर्गृहे कुर्यान्मूत्राद्युत्सर्जनं यदि ।
भैरवस्तानपि क्रूरान् पातयत्यस्त्रमण्डले ॥ 162

यस्त्वन्तर्गृहमाराध्यं मूत्राद्यैर्दूषयिष्यति ।
स यातनामवाप्नोति पुनरावृत्तिवर्जिताम् ॥ 163

इदं मुक्त्वैव मुनयस्तिष्ठन्त्यन्तर्गृहाद्बहिः ।
पञ्चक्रोशाद्बहिर्यान्ति मूत्राद्युत्सर्जनाय ते ॥ 164

प्राणिदुःखकरं कर्म न कार्यं सर्वथा जनैः ।
काश्यां स्थित्वा विशेषेण न कार्यं सत्यमुच्यते ॥ 165

अन्तर्गृहाद्बहिः काश्यामन्तर्गेहेऽपि वा जनैः ।
न कार्यं सर्वथा यत्नात् मूत्राद्युत्सर्जनं शुभे ॥ 166

अन्तर्गृहाद्बहिः कुर्याद्यदि मूत्रविसर्जनम्।
पुरीषोत्सर्जनं वापि तत्प्रायश्चित्तमुच्यते ।। 167

पञ्चगव्यं यथाशास्त्रं ग्राह्यं पुण्याहपूर्वकम् ।
ततोऽन्तगृहयात्रैका कर्तव्या विधिपूर्वकम् ।। 168

ततः पञ्चक्रोशयात्रा निराहारेण सादरम् ।
कर्तव्या विधिवद्विप्रा भोजनीयाश्च यत्नतः ।। 169

इदं मूत्रोत्सर्जनस्य प्रायश्चित्तमुदाहृतम् ।
पुरीषोत्सर्जने कार्यमेतच्छतगुणं क्रमात् ।। 170

एवमेव हि विज्ञेयमुभयत्रापि मुण्डनम् ।
ब्राह्मणाश्च यथाशक्ति भोजनीयाः प्रयत्नतः ।। 171

एकदा वा मलं मर्त्यैरेकदा मूत्रमेव वा ।
एवं कार्यं प्रयत्नेन प्रायश्चित्तं वरानने ।। 172

मलमूत्रादिकं काश्यां त्यक्तं तु बहुधा जनैः ।
बहुधैव तथा कार्यं प्रायश्चित्तं यथाविधि ।। 173

तादृशं यत्नतः कार्यं प्रायश्चित्तं यथोचितम् ।
अन्यथा यातनां घोरां प्राप्नुवन्ति न संशयः ।। 174

श्रीकालभैरवप्रान्ते कुण्डमस्त्येकमुत्तमम् ।
कालाष्टमीदिने तत्र स्नानं कार्यं विधानतः ।। 175

तत्कुण्डनिकटे रम्यं लिङ्गं कालेश्वराभिधम् ।
भैरवस्थापितं तिष्ठत्येकं पापौघनाशनम् ।। 176

तत्पूजनं यथाशास्त्रं कार्यं बिल्वदलादिभिः ।
ततः पूजा यथाशास्त्रं कर्तव्या भैरवेऽहनि ।। 177

प्रदक्षिणनमस्काराः कार्या अष्टोत्तरं शतम् ।
जागरेणोपवासेन प्रीणनीयो हि भैरवः ।। 178

शुचिभिस्तैलपक्वान्नैः शैवब्राह्मणपुङ्गवाः ।
भोजनीयाः प्रयत्नेन भैरवप्रीतिकामुकैः ।। 179

**श्रीपार्वत्युवाच -**

का वा कलाष्टमी शम्भो सा कालस्य प्रिया कथम् ।
जागरेणोपवासेन कथं तृप्यति भैरवः ।। 180

**श्रीशिव उवाच -**

कालाष्टमीति विज्ञेया कार्तिकस्यासिताष्टमी ।
तस्यामुपोषणं कार्यं तथा जागरणं निशि ।। 181

पुरा राथन्तरे कल्पे वसिष्ठाद्या मुनीश्वराः ।
देवाश्चेन्द्रादयः सर्वे काश्यां सम्पूज्य मां विभुम् ।। 182

नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवौ ।
कृत्तिवासेश्वरं प्रापुर्बिल्वपत्रादिसाधनाः ॥ 183

कृत्तिवासेश्वरं सम्यक्पूजयित्वा ततः परम् ।
ध्यायन्तः शङ्करं नित्यमुपविष्टाः स्थिरासनाः ॥ 184

तदानीमागतो ब्रह्मा कृत्तिवासेश्वरालयम् ।
रिक्तपाणिरनभ्यर्च्य शिवं मां स तु संस्थितः ॥ 185

तदानीं विस्मिताः सर्वे वसिष्ठाद्या मुनीश्वराः ।
तमूचुर्भ्रान्तमनसः स्मयाविष्टा उदङ्मुखाः ॥ 186

**ऋषय ऊचुः -**

किं ब्रह्मन् देवदेवेशं शङ्करं साम्बमव्ययम् ।
अभ्यर्च्यं तमनभ्यर्च्य रिक्तपाणिरुपस्थितः ॥ 187

बिल्ववृक्षाः करप्राप्याः सन्ति काश्यां तु भूरिश ।
तथापि बिल्वपत्राणि नानीतानि कथं त्वया ॥ 188

बिल्वकण्टकभीत्या किं पत्रं तन्नार्जितं त्वयाः ।
किमेव रक्षितेनाऽथ शरीरेण तवाधुना ॥ 189

बिल्कण्टकसंविद्धकरा बिल्वार्चनप्रियाः ।
भुक्त्वा भोगांश्च बिपुलाञ्छिवलोकं प्रयान्ति हि ॥ 190

धर्मसिद्धिर्विना क्लेशं न धर्मः क्लेशसाधकः ।
क्लेशाधिक्यात्फलाधिक्यमिति न ज्ञायते त्वया ? ।। 191

हंसतीर्थमिदं पुण्यं कृत्तिवासेशसन्निधौ ।
ततो जलं च नानीतं किं देवार्थं त्वयाऽधुना ।। 192

अपामार्गस्य पत्राणि सुलभानि बहूनि च ।
सन्त्यत्र तानि वा ब्रह्मन्नानीतानि कथं त्वया ।। 193

रिक्तहस्तो महादेवं यो याति सुमहानपि ।
विनश्यति न सन्देहो नरकं चाधिगच्छति ।। 194

पूज्यस्य देवदेवस्य शङ्करस्य महात्मनः ।
न करोति च यः पूजां स याति नरकं ध्रुवम् ।। 195

प्रमादेनाभिमानेन तथा गर्वेण वा भ्रमात् ।
प्राप्य शम्भुं रिक्तहस्तो नष्टधर्मो भविष्यति ।। 196

नष्टधर्मस्ततो याति यावदाचन्द्रतारकम् ।
नरकं तस्य नरकान्निर्गमो नास्ति सर्वथा ।। 197

प्रणामोऽस्य त्वया ब्रह्मन् न कृतः पापनाशकः ।
महादेवस्य तैरीशः प्रीणाति भगवान् शुचिः ।। 198

शुभं न दृश्यते ब्रह्मन् तवाद्यात्र न संशयः ।
अनर्चितमहेशस्य त्वशुभं भवति ध्रुवम् ।। 199

इत्युक्त्वा संस्थितान्देवि ब्रह्मा तानृषिसत्तमान् ।
उवाचातीव सङ्क्रुद्धः पापाश्रय इवानिशम् ।। 200

ब्रह्मोवाच -

अहमेवाखिलैः पूज्यः पूज्यो मम न सर्वथा ।
किं शूली मम संपूज्यः पूज्योऽहं शूलिनो ध्रुवम् ।। 201

वेदाः सृष्टा मया सर्वे सृष्टा लोका मया पुरा ।
मदन्यः सर्जको लोके नास्ति पूज्योऽपि सर्वथा ।। 202

भ्रान्ता यूयं न सन्देहः शूलिपूजापरायणाः ।
पूजा ममैव विहिता वेदास्तत्र तु साक्षिणः ।। 203

प्रलपन्नेवमेवान्यद्विश्रान्तोऽसौ तदा विधिः ।
तस्थौ ततो महाविष्णुरर्घ्यपाणिरुपागतः ।। 204

ततोऽभिषिच्य मां विष्णुः क्षीराज्यादिभिरादरात् ।
चकार पूजां विविधां बिल्वपत्रादिभिर्मुदा ।। 205

धूपदीपांश्च नैवेद्यं क्षीराज्यदधिमिश्रितम् ।
दत्वा ददौ पुनर्दीपान् पुनः पुष्पाञ्जलिं ददौ ।। 206

प्रदक्षिणनमस्कारान् चकार तदनन्तरम् ।
ततः पञ्चाक्षरं शैवं जजाप स जनार्दनः ।। 207

ततस्तं ध्याननिरतं विधिर्दृष्ट्वा हरिं तदा ।
उवाच वचनं भ्रान्तः क्रोधमुत्पादन्हरेः ॥ 208

असम्पूज्यैव पूजार्हं मामयं विष्णुरुद्धतः ।
शूलिपूजां करोत्यत्र भ्रान्तोऽयं नात्र संशयः ॥ 209

इत्युदीरितमाकर्ण्य वचनं तद्विधेर्हरिः ।
पूजां समाप्य तदनु जगाद वचनं तदा ॥ 210

**विष्णुरुवाचः -**

हा हा दुर्भग दुर्बुद्धे किमेवं वक्तुमर्हसि ।
कथं भ्रान्तोऽद्य जातोऽसि शुभं नाद्य तु दृश्यते ॥ 211

सर्वदेवोत्तमः साम्बः शङ्करो भक्तवत्सलः ।
सर्वेषामपि सम्पूज्यः तस्य पूज्यो न दृश्यते ॥ 212

तस्यैव पूजाविहिता सर्ववेदेषु सर्वथा ।
तत्पूजयैव सम्प्राप्तो मोक्षो मोक्षप्रदः शिवः ॥ 213

शिवपूजा मया पूर्वं बहुधैव कृता मुहुः ।
अहं शिवप्रसादेन पालयाम्यखिलं जगत् ॥ 214

इत्युक्तवन्तं तं विष्णुं भ्रान्तोऽसीति जगाद सः ।
मत्तोऽन्यो न हि सम्पूज्यः पूज्योऽहं नात्र संशयः ॥ 215

भ्रान्ताः सर्वे कथं जाताः पूज्यं मां सर्वसाधनैः ।
न पूजयन्ति दुर्वृत्ता मामित्येवं वेदस्थितः ॥ 216

तदा क्लेशान्वितो विष्णुः शङ्करं लोकशङ्करम् ।
तुष्टाव विविधैः स्तोत्रैरुवाचेदं वचस्तदा ॥ 217

शम्भो प्रसीद देवेश क्लेशान्दूरीकुरुष्व मे ।
अशैवं संहरस्वैनमधर्मस्य प्रवर्तकम् ॥ 218

अधर्मवृत्त्या सर्वेऽपि यास्यन्ति नरकं ध्रुवम् ।
कृपालुरसि देवेश विधिमेनं प्रणाशय ॥ 219

अशैवोऽयं दुराचारः स्थापनीयो न सर्वथा ।
अशैवशिक्षा कर्तव्या देवेश त्रिपुरान्तक ॥ 220

नोचेदधर्मवृद्धिस्तु भविष्यति न संशयः ।
अधर्मवृद्ध्या देवानां दुःखवृद्धिर्भविष्यति ॥ 221

इत्युक्त्वा प्रणतो विष्णुः स ऋषिः सं(सर्षिसङ्घः)
स्तुवंस्तदा ।
प्रसीदेश प्रसीदेश प्रसीदेति वदन्मुहुः ॥ 222

तदोग्ररूपादनघान्मत्तः श्रीकालभैरवः ।
आविरासीत्तदा लोकान्भीषयन्नखिलानपि ॥ 223

व्याप्यायं सप्तपातालाननन्तचरणैः स्वयम् ।
भूर्भुवः सुवरादींश्च शिरोऽभिव्याप्य संस्थितः ॥ 224

दिशो दशव्याप्तहस्तैरनन्तैर्विवृताननः ।
अनन्तसूर्यप्रतिमः कालानलसमप्रभः ।। 225

नानाशस्त्रावृताकारो नानागन्धानुलेपनः ।
नानामालावृतो नानारत्नाभरणसंवृतः ।। 226

अन्तरूपकूपेषु वहन्नग्निकणान्बहून् ।
निःश्वासपवनैरग्निं विसृजन् रक्तलोचनः ।। 227

अकाण्डप्रलयाग्नीनां समूहमिव संस्थितः ।
दृष्ट्वा तं विस्मिताः सर्वे देवाः स ऋषिपुङ्गवाः(?) ।।

चचालावनिरुद्विग्ना चेलुश्च कुलपर्वताः ।
शेषश्चकम्पे सकलैः फणिभिश्च समावृतः ।। 229

तन्निःश्वासमहावायुरुत्पातपवनोऽभवत् ।
तत्कराघातमात्रेण पेतुरुर्व्यां च तारकाः ।। 230

पापत मूर्च्छितो विष्णुस्तं दृष्ट्वा भीमविक्रमम् ।
पेतुर्मुनिवरास्सर्वे देवाश्चेन्द्रपुरोगमाः ।। 231

क्षुब्धाः समुद्राः सर्वेऽपि क्षीराब्धिप्रमुखास्तदा ।
उद्वेलाश्च बभूवुस्ते महाकल्लोलसङ्कुलाः ।। 232

ततस्तु भैरवो लोकान् भीषयन्नखिलानपि ।
प्रणम्य मामुवाचेदं वचनं विनयान्वितः ।। 233

**भैरव उवाचः -**

शम्भो किं करवाण्यद्य कार्यं ते किमुपस्थितम् ।
शोषणीयाः सुमुद्राः किं क्षणेनैवाद्य लीलया ।। 234

किं वा कुलाचलाः सर्वे भक्षणीयास्त्वदाज्ञया ।
भस्मीभूताश्च कर्तव्या देवाः सर्वे किमीश्वर ।। 235

किं भस्मसादुर्पत्वीश सशैलवनकानना ।
पृथिवी सनदी वा मामाज्ञापयतु शङ्कर ।। 236

मा विलम्बं कुरुष्वेश किं विलम्बेन शङ्कर ।
त्वत्प्रसादेन सर्वेषां नाशकश्च भवाम्यहम् ।। 237

मयोग्रतररूपेण तूष्णीं स्थातुं न शक्यते ।
देवोत्तम महादेव हराज्ञापय मां विभुम् ।। 238

एवमुक्तो भैरवेण प्रणतश्च मुहुर्मुहुः ।
तदा ब्रह्मशिरश्छेदं कुरुष्वेत्युक्तवानहम् ।। 239

ततो विधिं भैरवस्तं दृष्ट्वा प्रस्फुरिताधरः ।
नखाग्रेणैव चिच्छेद शिरांसि च पपात सः ।। 240

ततस्तस्य विधेश्छिन्नं प्रथमं तु शिरस्तदा ।
जगाम नागनिलयं प्रलपन्सत्वरं शिवे ।। 241

तदा तस्य शिरो दृष्ट्वा ब्रह्मणः फणिराट् तदा ।
विस्मितो मुक्तिमेतस्य शिरश्छेदस्य कारणम् ।। 242

इदं ब्रह्मशिरो नूनं मया तु परिचीयते ।
ब्रह्मणो न शिवादन्यः शास्ता देवेषु विद्यते ।। 243

प्रायशो देवदेवस्य महादेवस्य पूजनम् ।
न कृतं ब्रह्मणा तस्माच्छिवेन निहतो विधिः ।। 244

प्रायशो ब्रह्मणा शम्भोर्धिक्कारो वा कृतो ध्रुवम् ।
नन्दिकेशस्य वाऽन्यस्य शिवभक्तस्य वा ध्रुवम् ।। 245

शिवं वा शिवभक्तं वा नन्दिकेशं शिवप्रियम् ।
यो धिक्करोति तस्येयं गतिर्भवति सर्वथा ।। 246

अन्यथा ब्रह्मणोऽकाण्डे शिरश्छेदः कथं भवेत् ।
नायं प्रलयकालश्च ब्रह्मविष्ण्वीशनाशकः ।। 247

समयः प्रलयस्यास्तु मास्तु वायं तथाप्यहम् ।
काशीं प्रति गमिष्यामि यत्र प्रलयभीर्न मे ।। 248

महाप्रलयकालेऽपि काशीस्थो न विनश्यति ।
ततः काशीमहं यास्ये यत्र न प्रलयोद्भवः ।। 249

दग्धा भवन्तु ब्रह्माद्या लोका दग्धा भवन्तु च ।
यास्येऽहं सर्वथा नित्यां काशीं माहेश्वरीं पुरीम् ।। 250

इत्युक्त्वा फणिराट्च्छीघ्रं काशीं प्रति समाययौ
पाहि पाहि महादेव प्रलयादिति संवदन् ।।

सम्प्राप्य काशीं पूतात्मा प्रहृष्टहृदयः फणी ।
अमन्यत तदात्मानं कृतार्थं भाग्यसंश्रयम् ।।

दृष्ट्वा काशीं पुरीं शैवीं शैवमोक्षप्रदायिनीम् ।
साक्षाच्छिवस्वरूपेयं देवानामपि दुर्लभा ।।

कृपा मयि महेशस्य सम्पूर्णा तिष्ठति ध्रुवम् ।
यतोऽतिदुर्लभा काशी सुलभाऽद्य ममाभवत् ।।

अतः परं भयं नास्ति मृतेरपि मम ध्रुवम् ।
यतः प्राप्ता मया काशी यां मृत्युर्नैव पश्यति ।।

ततः स रत्नपुष्पाद्यैर्विश्वेशं मां सनातनम् ।
सम्पूज्य नित्ययात्रादि सर्वकर्म चकार सः ।।

आदिभैरवमभ्यर्च्य धूपदीपादिभिस्ततः ।
कृत्तिवासेश्वरं द्रष्टुं पुष्पपाणिरुपाययौ ।।

श्रीकालभैरवं दृष्ट्वा भीमरूपं भयानकम् ।
चकम्पे मूर्च्छितः शेषः पपात पृथिवीतले ।।

मया चोत्थापितो विष्णुस्ततः पूर्वं स उत्थितः ।
इन्द्रादयः स ऋषयो (?) मयैवोत्थापिताः शिवे

विष्णुरिन्द्रः फणिपतिर्देवाश्चान्ये मुनीश्वराः ।
ददृशुश्छिन्नशिरसं विधिं तं पतितं भुवि ।। 260

ततो विष्णुस्सदेवेन्द्रः सऋषिः सफणिस्तथा (?) ।
स्तोत्रैरनेकैः स्तुत्वा च (तुष्टाव) भीमं श्रीकालभैरवम् ।।

देवा ऊचुः -

नमस्ते कालनाथाय नमस्ते कालरूपिणे ।
नमो भीमाय चोग्राय नमस्ते शूलपाणये ।। 262

नमस्ते कालकण्ठाय नमस्ते कालभक्षक ।
नमो दिगम्बरानन्त नमः परमपूरुष ।। 263

नमो विश्वात्मक श्रीमन् नमो विश्वैकजीवन ।
नमस्तेऽस्तु सहस्राक्ष सहस्रकर ते नमः ।। 264

सहस्रचरणामेय नमस्ते भैरवप्रभो ।
नमस्ते रुद्र रुद्रात्मन्नमस्ते रुद्रसम्भव ।। 265

नमस्ते शाम्भवानन्द नमस्ते भूतभावन ।
नमस्ते सर्वलोकेश सर्वाधारामरार्चित ।। 266

नमस्ते दिक्स्वरूपाय नमस्ते भूस्वरूपिणे ।
नमस्ते सूर्यरूपाय चन्द्ररूपाय ते नमः ।। 267

नमस्ते ग्रहरूपाय रूपातीताय ते नमः ।
नमः सकलकल्यागभाजनायामृतात्मने ॥ 268

नमःपरमवीराय नमः परशुधारिणे ।
नमो डमरुहस्ताय नमः खट्वाङ्गधारिणे ॥ 269

नमोऽनन्तगुणाधार नमोऽनन्तस्वरूपिणे ।
नमो विभूतिकवच व्योमकेश नमोऽस्तुते ॥ 270

नमस्त्रिशूलहस्ताय नमस्ते मुण्डमालिने ।
नमः प्रेतासनासीन जपावर्ण नमोऽस्तु ते ॥ 271

नमो ब्रह्मण्यरूपाय विधिनाशकृते नमः ।
अशैवशैलवज्राय शिवद्रोहिविनाशक ॥ 272

शिभक्तप्रिय श्रीमन्नमः श्रीकालभैरम ।
शरण्यमूर्ते सर्वात्मिन्नमस्ते भक्तवत्सल ॥ 273

शिवनेत्रानल श्रीमन्नमस्ते शिवपूजक ।
नमो रक्ताम्बर श्रीमन्नमस्ते रक्तचन्दन ॥ 274

नमस्ते रक्तकेशाय नमस्ते रक्तबाहवे ।
नमस्ते रक्तफालाय नमो रक्तनखाय ते ॥ 275

निर्विकार निरीहेश निरञ्जन निराश्रय ।
निरुपद्रव निर्द्वन्द्व निरामय निरञ्जन ॥ 276

व्यालोपवीतिन्नुग्रात्मन्महाप्रलयकारण ।
अनेकसोमसूर्याग्निगणाकार नमोऽस्तु ते ॥ 277

दृष्ट्वा तं देवमत्युग्ररूपं भीता दिवौकसः ।
भीतोऽस्म्यहं कृपासिन्धो भीताश्च ऋषिपुङ्गवाः ॥ 278

द्रष्टुं न शक्यते घोरं तवेदंरूपमीदृशम् ।
सौम्यरूपं बहस्वेश प्रसीद करुणाकर ॥ 279

दुष्टस्यैवं मता शिक्षा शिवद्रोहरतस्य तु ।
शिक्षेयमेव सर्वेश अशैवानां दुरात्मनाम् ॥ 280

उत्साहोऽद्य महानासीन्मम श्रीकालभैरव ।
दुरात्मायं शिवद्रोही निहतोऽद्य यतस्त्वया ॥ 281

यदा मम महेशेन विष्णुत्वं दत्तमादरात् ।
तदापि भैरव श्रीमन् सन्तोषोनेदृशोऽभवत् ॥ 282

अशैवे निहते दुष्टे धर्मोऽपि स्थिरतां गतः ।
अन्यथा धर्मलेशस्याप्यवस्थानं तु दुर्लभम् ॥ 283

परन्तु भैरव श्रीमन् शिक्षास्य हितकारिणी ।
जाता मरणमात्रेण मुक्तिरत्र भविष्यति ॥ 284

ततोऽस्य मरणं येन न भविष्यति भैरव ।
तथा शिरांसि ग्रीवासु योजयामि त्वदाज्ञया ॥ 285

एकं गतं शिरोऽस्यैव पातालं प्रति सत्वरम् ।
दुःखमेवमशैवानां भावीति ख्यापनाय तत् ॥ 286

तेनोनः शिरसा ब्रह्मा दुःखितस्तिष्ठति प्रभो ।
मरणे त्वस्य दुःखानि नेदृशानीति मन्महे ॥ 287

स्मरन्स्वकृतकर्माणि दुःखहेतून्ययं विधिः ।
तिष्ठत्वाकल्पमत्यन्तदुःखितः प्रलपन् सदा ॥ 288

अपराधिनमालोक्य नृपाश्च क्रूरशासनाः ।
कुर्वन्ति पादहस्तान्यतरन्न्यूनं दुरासदाः ॥ 289

एनमालोक्य शिरसा हीनमन्ये नरासुराः ।
शिवद्रोहं दुःखहेतुं न करिष्यन्ति सर्वथा ॥ 290

ब्रह्मणोऽपीदृशं दुःखं शिवद्रोहरतात्मनः ।
किमुतास्माकमित्यन्ये भीताः स्थास्यन्ति भैरव ॥ 291

शिक्षेयं महती नूनं ब्रह्मणोऽमितविक्रम ।
शिक्षैवमेव कर्तव्या शिवद्रोहरतात्मनाम् ॥ 292

अशैवा नरके घोरे पातनीयाः प्रयत्नतः ।
यथा तेषां दुःखवृद्धिस्तोषवृद्धिस्तथा मम ॥ 293

प्राणैः संयोजयस्वैनं सत्वरं दुःखितो ध्रुवम् ।
दुःखं प्राणवियोगस्य कथं भवति भैरव ॥ 294

किञ्चास्य तृणरूपस्य वधार्ध(र्थं) रूपमीदृशम् ।
किमर्थं धृतमीशान कल्पक्षयकरं परम् ॥ 295

महाकल्पस्य नाशेऽपि न धृतं रूपमीदृशम् ।
प्रायशो भैरव श्रीमन् प्रलयान्तकर प्रभो ॥ 296

कुटिलेनाक्षिपातेन सर्वान् लोकानपि क्षणात् ।
भस्मीकर्तुं समर्थोऽसि भैरवात्र न संशयः ॥ 297

प्रसङ्गेनापि देवेश तव रूपं सनातनम् ।
दृष्टमद्य कृतार्थोऽस्मि क्वैतद्रूपस्य दर्शनम् ॥ 298

आद्यं तद्रूपमेतन्नो रूपं भैरव सर्वथा ।
इदं किञ्चिदपि द्रष्टुं न शक्यं सत्यमुच्यते ॥ 299

इत्युक्त्वा सऋषिर्विष्णुर्भैरवं भीमशासनम् ।
मुहुर्मुहुः प्रणम्यास्य पादमूले पपात सः ॥ 300

सौम्यरूपधरः श्रीमान् ततः श्रीकालभैरवः ।
उत्थाय(उत्थाप्य) विष्णुं वचनं जगादेदं तथास्त्विति ॥

ततः परं भैरवस्य श्रीमद्रूपस्य केशवः ।
आज्ञां मूर्ध्ना समादाय हृष्टचित्तोऽभवच्छिवे ॥ 302

ततो विधिकबन्धेन तच्छिरांस्यवनीतलात् ।
गृहीत्वा योजयामास यथास्थानं यथाक्रमम् ॥ 303

ततः स भैरवस्यैव प्रसादात्प्राणवानभूत् ।
ततः स दुःखं सम्प्राप्य गतोऽन्यत्र सलज्जया (?) । 304

ततो ववुः सुखा वाताः पुष्पवृष्टिर्बभूव च ।
प्रसन्नाश्च दिशः सर्वा बभूवुर्धूसराः पुरा ॥ 305

सिन्धवोऽपि यथास्थानं तस्थुः शैलाश्च पार्वति ।
पृथिवी च जहौ कम्पदोषं स्थानं समाययौ (?) ॥ 306

एतस्मिन्नन्तरे देवाः सूर्येऽप्यस्तं गते शिवे ।
ततः सन्ध्यादिकं कृत्वा शिवपूजापरा बभुः ॥ 307

ततः काशीपालनार्थं भैरवः स्थापितो मया ।
कृत्तिवासेश्वरस्यैव दक्षिणादिशि सादरम् ॥ 308

ततः सायं विष्णुमुख्याः कृत्वा पूजां मम प्रिये ।
भैरवाभ्यर्चनार्थाय जग्मुर्भैरवसन्निधौ ॥ 309

ततस्ते भैरवं देवमुपचारैश्च षोडशैः (?) ।
सम्पूज्यार्घ्यप्रदानानि चक्रुर्भक्तिसमन्विताः ॥ 310

उपोषणस्याङ्गभूतमर्घ्यदानमिह स्मृतम् ।
यथा जागरणं रात्रौ पूजा यामचतुष्टयम् ॥ 311

भैरवायोग्ररूपाय यस्त्वर्घ्यं न प्रयच्छति ।
तस्योपवासजनितं न फलं जागरार्जितम् ॥ 312

पात्रे पुष्पाणि सजलमादायार्घ्यमनुत्तमम् ।
जपन्तो ददुरर्घ्याणि भैरवायामितात्मने ।। 313

**अर्घ्यमन्त्रः -**

"भैरवार्घ्यं गृहाणेश भीमरूपाव्ययानघ ।
अनेनार्घ्यप्रदानेन तुष्टो भव शिवप्रिय ।। 314

सहस्राक्षिशिरोबाहो सहस्रचरणाजर ।
गृहाणार्घ्यं भैरवेदं सपुष्पं परमेश्वर ।। 315

पुष्पाञ्जलिं गृहाणेश वरदो भव भैरव ।
पुनरर्घ्यं गृहाणेदं सपुष्पं यातनापहम् ।।" 316

इति कृत्वार्घ्यदानानि शिवविष्णुपुरोगमाः ।
चक्रुर्जागरणं रूपं शंसन्तो भैरवस्य ते ।। 317

भैरवस्य तु कर्तव्या पूजा यामचतुष्टये ।
काश्यां शिवकथालापैर्निशि जागरणं सदा ।। 318

जागरं चोपवासं च कृत्वा कालाष्टमीदिने ।
प्रयतः पापनिर्मुक्तः शैवो भवति शोभने ।। 319

यो देवि भैरवाष्टम्यामुपवासं प्रयत्नतः ।। 320

न करिष्यति मोहेन स यात्येव हि यातनाम् ।
तस्मात्पूजा भैरवस्य कर्तव्या सततं बुधैः ।। 321

यातनाभीरुभिर्मर्त्यैर्मुनिभिश्चामरैरपि ।
यथाहमन्वहं पूज्यस्तथा प्रत्यहमादरात् ।। 322

पूजनीयः प्रयत्नेन भैरवो भीमशासनः ।
पुरा विष्णुरनेनैव भैरवेण हि भर्त्सितः ।। 323

निष्कासितश्च तेनैव पुनः संस्थापितो हरिः ।
पुरा क्षीराब्धिमध्यस्थो विष्णुर्लक्ष्मीसमन्वितः ।। 324

सायङ्कालेऽपि संश्लिष्य लक्ष्मीं तस्थौ प्रहर्षितः ।
तदा विलोक्य तं लक्ष्मीर्विष्णुं प्रोवाच सादरम् ।। 325

**श्रीलक्ष्मीरुवाच -**

रविरस्तं गतो मुञ्चाद्यम्यां मां च रतिं मयि ।
सायङ्काले शयानस्य लक्ष्मीर्नष्टा भविष्यति ।। 326

विशेषतः स्त्रीरतस्य त्यक्तसन्ध्यादिकर्मणः ।
सायङ्काले महादेवः पूजनीयोऽखिलैरपि ।। 327

कुरु भस्मोद्धूलनादि सर्वपापविनाशकम् ।
बिल्वपत्रादि सम्पाद्य यज देवोत्तमं शिवम् ।। 328

प्रणामानि(?) कुरु प्रीत्या शरणं व्रज शङ्करम् ।
सर्वेष्वपि प्रदोषेषु पूजनीयः सदा शिवः ।। 329

इदानीं सप्तमीयोगो विशेषेणाद्य वर्तते ।
यः सप्तमीप्रदोषेषु शङ्करं पूजयिष्यति ।। 330

न तस्य नरकावासो दारिद्र्यं च न सर्वथा ।
प्रदोषकाले भगवान् महादेवः सुराधिपः ।। 331

करोति ताण्डवं देवीमुपवेश्य शुभासने ।
ताण्डवाभिरतं देवं ग्रहनक्षत्रमौलिनम् ।। 332

हृदि ध्यात्वा महादेवं पूजयस्व(?) सुरोत्तम ।
अभिषिच्य महादेवं लिङ्गरूपिणमव्ययम् ।। 333

क्षीरेणाज्येन शुद्धैश्च जलैर्नीहारसन्निभैः ।
गृहीत्वा चन्दनं रम्यं शिवलिङ्गं समर्चय ।। 334

एतैर्नवैर्बिल्वपत्रैरभ्यर्चय महेश्वरम् ।
धूपदीपादिकं दत्वा नैवेद्यं च समर्पय ।। 335

प्रणामानि(?) कुरु प्रीत्या शैवं पञ्चाक्षरं जप ।
कुरु नृत्यं महादेवप्रीत्यर्थं करताडनैः ।। 336

प्रीणयस्व महादेवं शरणं याहि शङ्करम् ।
शिवपूजार्थमालस्यं यः करिष्यति मूढधीः ।। 337

स विहाय क्षीरमन्नं विषं पिबति सर्वथा ।
यदि त्यक्ष्यसि सायाह्ने महादेवस्य पूजनम् ।। 338

तदा त्वया मयाप्यद्य दुःखं प्राप्यं न संशयः ।
पत्रैर्जलैर्वा मन्त्रैर्वा पूजितः परमेश्वरः ॥ 339

तुष्टो भवति गौरीशस्तमेवार्चय शङ्करम् ।
धुत्तूरकुसुमेनापि पूजितः शङ्करः स्वयम् ॥ 340

ददाति परमं स्थानं योगिनामपि दुर्लभम् ।
तस्मादुत्थाय यत्नेन पूजयस्व सदाशिवम् ॥ 341

सम्पूज्य सायं विश्वेशं निष्पापो भव सत्वरम् ।
सायङ्काले महादेवं यो नार्चयति शङ्करम् ॥ 342

स एव सर्वपापानामाश्रयो भवति ध्रुवम् ।
सायं त्यक्त्वा शङ्करस्य देवदेवस्य पूजनम् ॥ 343

यस्तिष्ठत्यापदम्भोधिमग्नोऽसौ नात्र संशयः ।
ऐश्वर्यं तु मया प्राप्तं शङ्करस्यैव पूजया ॥ 344

तादृशेन कथं त्याज्यं त्वया शङ्करपूजनम् ।
यस्मादैश्वर्यकामेन मोक्षकामेन चानघ ॥ 345

कर्तव्यमनियत्नेन शङ्करस्यैव पूजनम् ।
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ॥ 346

मुच्यते पातकैः सर्वैः प्रदोषे शिवपूजया ।
हितमेव मयोक्तं ते नाहितं वच्मि सर्वथा ॥ 347

अविलम्बेन यत्नेन पूजयस्व महेश्वरम् ।
इत्युक्त्वा संस्थितां लक्ष्मीं भ्रान्तचित्तो हरिस्तदा ।। 348

उवाच वचनं लक्ष्मीं कम्पयन् कुञ्चिताननाम् ।
को वा ममास्ति सम्पूज्यः पूज्योऽहं सर्वदेहिनाम् ।। 349

कः शङ्करः क्व वा तस्य पूजने मुक्तिहेतुता ।
इत्युक्तं तद्वचः श्रुत्वा लक्ष्मीर्विष्णुमुवाच सा ।। 350

**श्रीलक्ष्मीरुवाच-**

हा हा विष्णो भ्रान्तचित्तः कथं जातोऽसि तद्वद ।
तवाशुभस्य कालोऽयं सत्वरं समुपस्थितः ।। 351

नो चेन्महादेवनिन्दा कथं कार्या त्वया हरे ।
दृश्यन्ते दुष्टचित्तानां शुभं चिह्नं न किञ्चन ।। 352

भ्रष्टं च मम धम्मिल्लमुत्तरीयमधोगतम् ।
त्रुटिता कण्ठमाला च भ्रूव्यथापि समुत्थिता ।। 353

क्षणार्धेनैव सम्प्राप्यमशुभं नात्र संशयः ।
महादेवस्य यो निन्दां करिष्यति सुरोऽपि वा ।। 354

स चण्डाल इति ज्ञेयो भवत्यग्रोऽपि सोऽन्त्यजः ।
एवमुक्त्वा स्थिता लक्ष्मीस्तदानीमेव भैरव: ।। 355

क्षीराब्धिप्रमुखानब्धीन्पपौ सप्तापि लीलया ।
पञ्चाशद्युगपर्यन्तं समुद्रास्तस्य तूदरे ।। 356

तत्र विष्णुः स्थितो लक्ष्मीसहितं सङ्कटं वहन् ।
ततश्चिक्षेप सकलानब्धीनमितविक्रमः ।। 357

ततः पपात गहने विष्णुर्जलविवर्जिते ।
पपातान्यत्र लक्ष्मीश्च दुःखिता भयविह्वला ।। 358

पतिता शोकसंविष्टा स्मरन्ती शङ्करं तदा ।
क्वासि शम्भो महादेव पाहि पाहीति चावदत् ।। 359

एतस्मिन्नन्तरे काले विष्णुर्लक्ष्मीमुपाययौ ।
विष्णुं दुःखितमालोक्य लक्ष्मीर्दुःखपराऽभवत् ।। 360

लक्ष्मीमुवाच विष्णुस्त्वां मया तव वचः पुरा ।
न श्रुतं तत्फलं जातमाशु दुःखमुपागतम् ।। 361

शङ्कराभ्यर्चनं त्यक्त्वा सायं स्थितमतो मया ।
प्राप्तं तु दुःसहं दुःखं मत्सम्बन्धात्त्वयापि तत् ।। 362

आपदामाश्रयाः श्रान्ताः श्रान्तोऽहमपि दुःखभाक् ।
मया श्रान्तेन न कृतं सायं शङ्करपूजनम् । 363

विध्युक्तकर्मनिरतैर्दुःखं न प्राप्यते बुधैः ।।
तदन्यैः सर्वथा प्राप्यं दुःखं नूनं क्षणे क्षणे ।। 364

सायं शिवार्चनं कार्यमप्रमादेन पावनैः ।
तस्मात्प्रमादो नो भूयादितिवेदेऽपि वर्तते । 365

अतःपरं पूजयामि शङ्करं लोकशङ्करम् ।
अतियत्नेन कमले गतो मोहो ममाधुना ॥ 366

आयाहि यामो निलयं वैष्णवं दुःखनाशकम् ।
यच्छङ्करार्चनाल्लब्धं पदं सर्वार्थदायकम् ॥ 367

**श्रीसदाशिव उवाच -**

इत्युक्तं तद्वचः श्रुत्वा विष्णुं लक्ष्मीरुवाच तम् ।
किं वैष्णवपदं विष्णो किमाद्याप्यस्ति तत्पदम् ॥ 368

तत्पदं रिटिना प्राप्तं दत्तं तान्नन्दिना पुरा ।
तस्मै तेन कथं देयं तत्पदं सर्वसौख्यदम् ॥ 369

अतःपरं कथं नन्दी प्रसन्नस्ते भविष्यति ।
तुष्टिस्तु नन्दिकेशस्य भूयसा तदसापि वा ॥ 370

यद्यत्पदं तु देवानां धिक्कारेण महेशितुः ।
च्युतं तत्तत्पदं सर्वं नन्दिकेशेन गृह्यते ॥ 371

शिवः कदापि तपसा प्रीतो मे न भवत्ययम् ॥ 372

नान्दिस्तु न भवत्येव सहसा प्रीतमानसः ।
शिवधिक्कारनिरतं नन्दिकेशो बलान्वितः ।। 373

शास्त्रैः सन्ताडयत्याशु दुःखाब्धौ पातयत्यपि ।
अनेकेषु विचित्रेषु बहुदुःखप्रदेष्वयम् ।। 374

अशैवान्पातयत्येव तेषां दुःखप्रदो मुहुः ।
यस्य कस्यापि वा विष्णो महादेवस्य शासनम् ।। 375

न लङ्घनीयं सर्वेषां शास्ता यस्मान्महेश्वरः ।
प्रदोषे नार्चयामास श्रान्तो देवोत्तमस्तदा ।। 376

तमुवाच शची देवी पूजस्वेति शङ्करम् ।
तदाऽवगणना तेन कृता तद्वचनस्य तु ।। 377

स्वर्गलोकस्य नाथोऽहं पूज्योऽहमखिलैः सुरैः ।
मम पूज्यतमो लोके कस्तिष्ठति वद प्रिये ।। 378

इत्युक्तो भोगनिरतः शचीमालिङ्ग्य सादरम् ।
तस्थाविन्द्रः कल्पपुष्पशय्यायां मदनातुरः ।। 379

तदानीं नन्दिकेशस्य भृत्यः कश्चित्समागतः ।
शिवावगणनं दिष्ट्या श्रुत्वाचेन्द्रमुखोद्गतम् ।। 380

ततस्सोऽप्यतिरुष्टः सन् शूलं जग्राह पाणिना ।
इन्द्रं ततः स शूलाग्रे प्रोथयामास सत्वरम् ।। 381

ततश्च भ्रामयामास शूलाग्रे सन्निवेश्य ह ।
द्वात्रिंशद्युगपर्यन्तं चक्रवद्गगनान्तरे ।। 382

ततस्तं पातयामास स तु दुर्दुरपर्वते ।
पतित्वा तत्र देवेन्द्रस्तिष्ठत्यद्यापि दुःखितः ।। 383

नन्दिकेशस्य भृत्यैर्वा स्वर्गलोकः समावृतः ।
इन्द्रोऽपि स तपश्चर्यापरो भूत्वापि तिष्ठति ।। 384

शङ्करस्यावगणना ततः स्वप्नेऽपि सर्वथा ।
देवदेवाधिदेवस्य न कर्तव्या जनार्दन ।। 385

शिवं चानन्यसदृशं येऽन्यदेवसमं विदुः ।
न ते पतिव्रताजाता जारजास्ते न संशयः ।। 386

अन्यदेवसमं मत्वा शिवं देवोत्तमं प्रभुम् ।
आचन्द्रार्कमघोरेषु नरकेषु पतिष्यति ।। 387

स मद्यपः स चण्डालः स महापातकाश्रयः ।
मनुते योऽन्यसदृशं देवदेवोत्तमं शिवम् ।। 388

प्राप्तं शिवप्रसादेन विष्णुत्वं च त्वया पुरा ।
ततस्त्वं सर्वभावेन शङ्करं शरणं व्रज ।। 389

नान्यदेवसमः शम्भुः शिवो देवोत्तमः प्रभुः ।
तस्यावगणना विष्णो सर्वनाशाय जायते ।। 390

ततः शम्भुं प्रीणयस्व तपसोग्रेण सादरम् ।
प्रसन्नः पार्वतीनाथस्तुष्ट इष्टं प्रदास्यति ।। 391

**श्रीसदाशिव उवाच-**

इत्युक्तः स तया विष्णुस्तत्रैवोग्रं तपस्तदा ।
तप्तुं समारभद्देवि पञ्च प्रज्वाल्य पावकान् ।। 392

त्रिकोटियुगपर्यन्तं तपस्तप्तं च विष्णुना ।
जिताहारेण तेनैव श्वासान् सम्यङ्निरुध्य च ।। 393

प्रसन्नोऽस्मि ततो विष्णोस्तदुग्रतपसा शिवे ।
प्रसन्ने सति मां विष्णुस्तुष्टाव बहुधा स्तवैः ।। 394

ततः पदं दार्पितं च विष्णवे रिटितो मया ।
तत्रोवास महाविष्णुः स्मृत्वा दुःखानि सर्वथा ।। 395

तदाप्रभृति विष्णुर्मां मत्प्रसादपरो भृशम् ।
पूजयत्यतियत्नेन सर्वकालेष्वतन्द्रितः ।। 396

इति त्रिंशत्सहस्रान्ते कल्पे विष्णुः प्रतापवान् ।
नारसिंह्यं परं रूपमुग्रं सन्धारयिष्यति ।। 397

योजनानां शतं व्याप्य भानुमण्डलसन्निभः ।
कृत्वा स देवकार्याणि देवैः सम्पूजितः सदा ।। 398

न मत्तोऽभ्यधिको लोके न मया सदृशोऽपि वा ।
नास्तीति सुरवर्गेषु पश्यत्स्वपि वदिष्यति ॥ 399

तदा तु शरभं रूपं कृत्वा तं संहराम्यहम् ।
नखाग्रे प्रोथयित्वा तं भ्रामयामि न संशयः ॥ 400

हरिं हरं तमीशानं विश्वस्य सकलस्य तु ।
अहं विलोक्य यत्नेन भैरवः काशिपालकः ॥ 401

पेषयिष्यति पाषाणे पुनर्जीवनशङ्कया ।
तदाप्रभृति देवानां नाथाः सिद्धानिपातनम् ॥ 402

पूजयिष्यन्ति तन्नाम्ना सर्वपापभयापहम् ।
अशैवं भैरवो वीक्ष्य दावानलसमप्रभः ॥ 403

दहिष्यति न सन्देहस्तमशैवं दुरासदम् ।
अशैवनाशनार्थाय काश्यां श्रीकालभैरवः ॥ 404

स्थापितोऽस्ति मया देवि सुरगन्धर्वपूजितः ।
दृश्यते भैरवः काश्यामशैवप्रलयानलः ॥ 405

चतुर्दशेऽपि भुवने तत्तुल्यो नास्ति शासकः ।
हन्त्यहं ब्रह्मविष्णवादीन् क्रोधसङ्कुलितेक्षणः ॥ 406

महाकालानलप्रख्यो दुराधर्षो ममाप्ययम् ।
यातनास्तम्भनिकटे यदा शूलधरः स्थितः ॥ 407

तदा ममापि सुभगे दुर्निरीक्षो हि भैरवः ।
एकोऽप्यनेकधा भूत्वा विश्वरूपोऽतिभीषणः ॥ 408

सञ्चरत्यस्त्रहस्तोऽयं यातनास्तम्भवीथिषु ।
विग्रहं कालनाथस्य प्रज्वलद्भूधरा इव ॥ 409

यातनास्तम्भपार्श्वेषु दृश्यन्ते भैरवाः शिवे ।
अवापुर्भैरवं क्रुद्धं पुरा विष्णुपुरोगमाः ॥ 410

ते तत्क्रोधानलहताः निपेतुर्भुवि मूर्च्छिताः ।
ततस्ते युगपर्यन्तं पतिताः पुनरुत्थिताः ॥ 411

शान्ते क्रोधानले नो चेद्यास्यन्ते तेऽपि भस्मताम् ।
प्रत्याश्रमं प्रतिगृहं प्रविश्यायं तु भैरवः ॥ 412

अशैवान्पातयेत्प्राज्ञः शिवार्चनपराङ्मुखान् ।
भस्मोद्धूलितरुद्राक्षधारणादिपराङ्मुखान् ॥ 413

लिङ्गपूजाविहीनांश्च दृष्ट्वा क्रुद्धो भवत्ययम् ।
तत्क्रोधो विफलो नैव भविष्यति कदाचन ॥ 414

यस्मिन् क्रोधोऽस्य तं धोरे पातयत्यस्त्रमण्डले ।
देवानामपि सर्वेषां शास्ता श्रीकालभैरवः ॥ 415

तदन्ये तृणभूतास्तु गन्धर्वा मुनयो नराः ।
भैरवो भीमवेषोऽयं दुर्निरीक्ष्यः सुरैरपि ॥ 416

यदा क्रोधसमाक्रान्तस्तदा द्रष्टुं न शक्यते ।
अशैवशासकं क्रूरं प्राप्य श्रीकालभैरवम् ॥ 417

सुखेन संवसाम्यत्र काश्यां नित्यं वरानने ।
यदा तु शैवधर्माणां सङ्क्षयः सम्भविष्यति ॥ 418

अशैवानां तु दुष्टानां दुःखदो भैरवो भवेत् ।
अशैवानां तदन्यस्तु शासको न भविष्यति ॥ 419

माहात्म्यं भैरवस्येदं समाख्यातं मया शिवे ।
सर्वपापक्षयकरं पठतां शृण्वतामपि ॥ 420

येनेदं पठ्यते प्रातर्माहात्म्यं भैरवस्य तु ।
न तस्य सर्वथा दुःखं स्वप्नेऽपि कमलानने ॥ 421

इदं माहात्म्यममलमादित्याभिमुखो यदि ।
पठति प्रीतिहृदयो स न प्राप्नोति यातनाम् ॥ 422

बालग्रहादिरोगेषु रक्षाकरममुत्तमम् ।
कुष्ठापस्माररोगादिविनाशकमपि प्रिये ॥ 423

भूर्जपत्रे लिखित्वेदं माहात्म्यं प्रत्यहं शिवे ।
यः पूजयिष्यति प्राज्ञः स दुःखानि न पश्यति ॥ 424

एतन्माहात्म्यमन्त्रैस्तु प्रत्यहं भैरवार्चकैः ।
प्रीणनीयो भीमरूपो भैरवो भीमविक्रमः ॥ 425

कालाष्टम्यां विशेषेण कालभैरवसन्निधौ ।
तत्प्रादुर्भावमाहात्म्यं पठनीयं प्रयत्नतः ॥ 426

शृण्वन् श्रीभैरवस्येमां प्रादुर्भावकथां नरः ।
भैरवार्चारतः शैवो यातनां नैव पश्यति ॥ 427

नित्यं भैरवमाहात्म्यं मन्त्रावर्तनपूर्वकम् ।
प्रदक्षिणादिकं कार्यं श्रद्धया यातनापहम् ॥ 428

श्रीकालभैरवे भक्तिः सदा कार्या प्रयत्नतः ।
पूजनीयोऽन्वहं पूज्यो देवानामपि शासकः ॥ 429

देवाश्च सर्वदा भीताः शासकं कालभैरवम् ।
पूजयन्त्यतियत्नेन प्रत्यहं भीमविक्रमम् ॥ 430

भैरवादुग्ररूपाद्धि नान्यः काश्यां प्रकाशकः (प्रशासकः) ।
अशैवादपरः काश्यां शास्योऽपि न वरानने ॥ 431

अशैवं मृतमालोक्य काश्यां भैरवकिङ्कराः ।
दीर्घतप्तायसैः शस्त्रैस्ताडयन्त्युरुविक्रमाः ॥ 432

प्रलयानलसङ्काशो ज्वालामालासमावृतः ।
कालभैरवकोपाग्निरशैवेन्धनदाहकः ॥ 433

ततः काश्यां विशेषेण शिवैकपरदैवतैः ।
शैवैः स्थातव्यमनिशमशैवैर्न कदाचन ॥ 434

कपाली कुण्डली भीमो भैरवो भीमविक्रमः ।
व्यालोपवीती कवची शूली शूरः शिवप्रियः ।। 435

एतानि दशनामानि पठन् यः प्रणमेत्सदा ।
शैवः शिवार्चकस्तस्य नास्ति भैरवयातना ।। 436

कार्कोटकश्चकारात्र तपो घोरतरं मुदा ।
सहस्रयुगपर्यन्तं काश्यां पञ्चाग्निमध्यगः ।। 437

तत्र कार्कोटकाख्यं च लिङ्गं संस्थापयन्मुदा ।
तल्लिङ्गस्य पुरोभागे कुण्डमेकं ससर्ज च ।। 438

यदा घोरं तपस्तप्तं तेन तल्लिङ्गसन्निधौ ।
तदा तल्लिङ्गतः शम्भुराविरासमहं शुभे ।। 439

ततः संवीक्ष्य मां नागः प्रणिपत्य पुनः पुनः ।
कृत्वा पूजां यथाशास्त्रं चकार स्तोत्रमादरात् ।। 440

ततस्तेनैव नागेन याचितौ च वरोत्तमौ ।
एको महेश्वरे भक्तिर्दृढास्त्विवति वरः परः ।। 441

अन्यो नभःशुक्लपक्षे पञ्चम्यां ये जना मुदा ।
स्नानं कुर्वन्त्यत्र कुण्डे तेषां रोगादि मास्त्विवति ।। 442

ततो दत्तं मया तस्मै वरद्वयमनुत्तमम् ।
ततः परमभूत्प्रीत्या तप्तं घोरतरं तपः ।। 443

विषदोषादि शान्त्यर्थं तद्दिने सर्वथा जनैः ।
स्नानं कार्यं प्रयत्नेन श्राद्धं च विधिपूर्वकम् ॥ 444

कार्कोटकुण्डनिकटे सन्ति शैवाः सहस्रशः ।
तैरपि स्वस्वनाम्नैव लिङ्गानि स्थापितानि च ॥ 445

काकोटकस्तपस्त्यक्त्वा शैवैः सह कदाचन ।
स्नानार्थं शिवगङ्गायां गतः शिवपरायणः ॥ 446

तत्र स्नात्वा यथाशास्त्रं आग्नीध्रेश्वरमव्ययम् ।
सादरं पूजयामास स शैवः शिवतत्परः ॥ 447

ततः पञ्चाग्निमध्यस्थमूर्ध्वबाहुं जितेन्द्रियम् ।
जटाभसितवीताङ्गं ददर्श स जनार्दनम् ॥ 448

दृष्ट्वा प्रणम्य बहुधा कृताञ्जलिपुटस्ततः ।
उवाच वचनं चारु शिवभक्तिहितावहम् ॥ 449

किन्नाम सर्वदा सर्वैर्जपनीयं प्रयत्नतः ।
कुत्रस्थातव्यमनिशं कथं ध्येयो महेश्वरः ॥ 450

काश्मीरादीनि लिङ्गानि सन्ति नानाविधानि च ।
तेषु श्रेष्ठतरं लिङ्गं किं इष्टफलदायकम् ॥ 451

कुत्र वा देवदेवस्य महादेवस्य सन्निधिः ।
केन रूपेण कर्तव्यं शिवलिङ्गस्य पूजनम् ॥ 452

इदं सर्वं विशेषेण निश्चित्य वद सादरम् ।
कृपया शिवभक्तानां हिताय शिवपूजकः ।। 453

**विष्णुरुवाच** -

कार्कोटक त्वया पृष्टं सम्यगेव यथोचितम् ।
यथाशास्त्रं यथाज्ञानं यथा वक्ष्ये शृणु प्रिय ।। 454

वेदोपगीतो बहुधा यश्च शैवः षडक्षरः ।
स एव सर्वथा जप्यः शिवमन्त्रो मुमुक्षुभिः ।। 455

शिवमन्त्रजपासक्ता मुक्ताः पूर्वं मुनीश्वराः ।
न शैवमन्त्रादपरो मन्त्रो मुक्तिप्रदायकः ।। 456

शैवं मन्त्रं विहायान्यं मन्त्रं यः समुपासते (?) ।
स मणिं करगं त्यक्त्वा काचार्थं यतते ध्रुवम् ।। 457

प्रभावः शैवमन्त्राणां ज्ञायते न मया ध्रुवम् ।
तत्वं तु शिवमन्त्राणां जानाति शिव एव हि ।। 458

पुरा हिमालयप्रान्ते कश्चिद्विप्रो द्विजाधमः ।
ब्रह्महत्यादिपापानि चकार क्रूरमानसः ।। 459

हता मृगवराः शुद्धा मृगमांसमनेकधा ।
भक्षितं गोसहस्राणि निहतानि शितानि च ।। 460

स एव क्रूरसर्पेण दंशितोऽभूत्कदाचन ।
ततः शिवशिवेत्युक्त्वा नाम सद्यो मृतो द्विजः ॥

तदानीं कोटिशः क्रूरा यमदूताः समागताः ।
ततस्ते गन्तुमुद्युक्ता बध्वा पाशैर्द्विजाधमम् ॥

कश्चिद्धिमगिरिप्रान्ते सञ्चरन् शिवकिङ्करः ।
तदुक्तं मृतकालीनं नाम शुश्राव शाङ्करम् ॥

श्रुत्वा तन्नाम बिमलं धन्यं मत्वा च तं द्विजम् ।
यमीयकिङ्करान् दृष्ट्वा जगाद वचनं मुदा ॥

**शिवकिङ्करः -**

रे रे यमभटाः क्रूराः शृण्वन्तु वचनं मम ।
अनेनोच्चारितं दिव्यं शिवनाम श्रुतं मया ॥

अयं शैववरो धन्यो नास्य यामीययातना ।
देयमस्मै महेशेन गाणापत्यं न संशयः ॥

शिवेति नाम विमलं यदनेनोक्तमादरात् ।
तेनैवाखिल पापानि नष्टान्यस्य न संशयः ॥

तदानन्तरमुक्तं यच्छिवनामाघनाशनम् ।
मुक्तिदं तद्भवत्येव मा कुर्वन्त्वत्र संशयम् ॥

नायं नेयो भवद्भिस्तु गन्तव्यं भवतां यदि ।
जीवनेच्छा तदा नो चेत् हनिष्यामि न संशयः ॥ 469

इति तद्वचनं श्रुत्वा मत्तास्ते यमकिङ्कराः ।
अनादृत्यैव तद्वाक्यं तं बध्वा गन्तुमुद्यताः ॥ 470

तदाभवन्महद्युद्धं देवदानवदुःसहम् ।
सार्धकोटिसहस्रं ते दुर्जया यमकिङ्कराः ॥ 471

तैःसहैकश्चाकारोग्रं जन्यं स शिवकिङ्करः ।
युद्धभूमिगताः क्रूरा यावन्तो यमकिङ्कराः ॥ 472

तावन्त एव सन्त्यत्र शैवा इति विदुः सुराः ।
शैवेन प्रेषितं शूलेमकमेवैकदा तदा ॥ 473

सार्धकटिसहस्राणि शूलानि समजायत ।
शैवो बिभूतिकवचः शूलमात्रकरः शुचिः ॥ 474

चित्रं युद्धं चकारैकः सहितो यमकिङ्करैः ।
एकमेवोग्रवीर्यं तं दृष्ट्वैव शिवकिङ्करम् ॥ 475

देवदानवगन्धर्वा ययुः प्रतिदिशं प्रति ।
तदाऽभवच्छोणितस्य प्रवासो मांसकर्दमः ॥ 476

वपाफेनगणाकीर्णं सङ्कीर्णयमकिङ्करैः ।
ततश्चान्ते घोरयुद्धे श्रुत्वा वार्तां यमस्तदा ॥ 477

सर्वसन्नाहयुक्तः सन् ययौ युद्धभुवं प्रति ।
तमागतं समालोक्य यमं स शिवकिङ्करः ।। 478

एहि एहि यमेत्युक्त्वा शूलं जग्राह पाणिना ।
ततो यमः शूलहस्तं रुद्राक्षवलयावृत्तम् ।। 479

विभूतिकवचं शैवं ददर्श शिवकिङ्करम् ।
दृष्ट्वा कृताञ्जलिपुटः कम्पमानो भयाकुलः ।। 480

प्रणम्य दण्डवद्भूमौ पूजां चक्रे यथाविधि ।
पुनः प्रणम्य बहुधा प्रसाद्य शिवकिङ्करम् ।। 481

जगाद वचनं चारु विनयान्नयकोविदः ।
शिवभक्तवर श्रीमन् शिवत्तत्वविदां वर ।। 482

एतस्मिन्नीदृशी भक्तिस्तव जाता कथं वद ।
अनेन ब्रह्महत्यादिपापानि विविधानि च ।। 483

कृतानीति वदत्येव चित्रगुप्तो विशारदः ।
अनालोचितकर्तायं न भवत्येव सर्वथा ।।
विश्वासो बहुधास्त्यस्मिन् नानृतं न वदत्ययम् ।। 484

ईदृशः पापनिरतः कथं वा रक्षितस्त्वया ।
कथं मम हृतं सैन्यमविचार्य त्वयाधुना ।। 485

प्रायशः पुण्यवानेव भविष्यत्ययमीदृशः ।
यतः शैवोत्तमेनात्र सन्निधानं कृतं त्वया ॥ 486

शिवलिङ्गार्चकाः शैवा रुद्राक्षभसितावृताः ।
बहुपुण्यफले पूर्णे दृश्यन्ते शिवसम्मताः ॥ 487

यस्मिन् देशे महाशैवास्तिष्ठन्ति शिवपूजकाः ।
तद्देशवासिनः सर्वे कृतार्था नात्र संशयः ॥
शैवाङ्गसङ्गमात्रेण पिशाचः पूर्वमुद्धृतः ॥ 488

स्वपिशाचतनुं त्यक्त्वा गन्धर्वोऽभवदुत्तमः ।
यस्मिंस्तुष्यति शैवेन्द्रस्तस्मिंस्तुष्यति शङ्करः ॥ 489

शिवभक्तिप्रसादोऽयं प्रसादः शङ्करोद्भवः ।
यत्र शैवोत्तमस्यास्ति सन्निधानमघापहम् ॥ 490

तत्रास्ति शङ्करः शैवसन्निधानं न संशयः ।
शैवः शिवतरः शान्तः शिवस्यापरविग्रहः ॥ 491

तस्मिन्दृष्टे महादेवो दृष्ट एव न संशयः ।
अयं तु भाग्यवान्धन्यः पुण्यवानिति सर्वथा ॥ 492

त्वत्सन्निधानलेशेन सम्यगेवानुमीयते ।
क्षमां कुरु जगद्वन्द्य शैवोत्तम शिवार्चक ॥ 493

नतोऽस्मि त्वत्पदद्वन्द्वे कोपं संहर संहर ।
इति तद्वचनं श्रुत्वा स शैवो वीतमत्सरः ॥ 494

निजगाद ततो वाक्यं यममुद्दिश्य कोविदः ।
अनेन ब्रह्महत्यादि कृतं तत्सत्यमुच्यते ।। 495

तत्पातकमभूद्भ्रष्टमन्तकाले शिवः स्मृतः ।
अथं शिवशिवेत्युक्त्वा जहौ प्राणानिहाधुना ।। 496

अद्योक्तशिवशब्देन दग्धं पातककाननम् ।
तदनन्तरमुक्तेन शिवशब्देन सर्वथा ।। 497

अयं शिवप्रसादेन भविष्यति गणाधिपः ।
इति तद्वचनं श्रुत्वा कम्पमानो यमस्ततः ।। 498

पूजयामास विधिवच्चैवं मृतमपि द्विजम् ।
तदानीमेव विश्वेशप्रेषिताः शिवकिङ्कराः ।। 499

दिव्यरत्नविमानानि समारुह्य ययुर्मुदा ।
तदानीं पुष्पवृष्टिश्च बभूव शिवनिर्मिता ।। 500

नेदुर्दुन्दभयो दिव्याः प्रसन्नाश्च दिशो बभुः ।
ततस्तानागतान् दृष्ट्वा शमनः शिवकिङ्करान् ।। 501

पूजयामास विधिवद्भक्तिश्रद्धासमन्वितः ।
ततो मृतं द्विजं शैवं पस्पर्शु (पस्पृशुः) शिवकिङ्कराः ।।

ततः समभवद्विप्रो दिव्यरूपधरस्तदा ।
ततो विमाने तं विप्रं स्थापयित्वा शिवार्चकाः ।। 503

ययुश्च वायुवेगेन कैलासं प्रति शाङ्कराः ।
ततस्तस्मै महेशेन गाणापत्यमनामयम् ।। 504

दत्तं तदैव नागेन्द्र तत्र तिष्ठति सोऽधुना ।
ईदृशा बहवः पूर्वं महापातकिनो जनाः ।। 505

मृतिकालीनविश्वेशस्मरणान्मोक्षमाययुः ।
नृणां मरणकाले तु शिव इत्यक्षरद्वयम् ।। 506

न याति सहसा(स्मरणे) नूनं शङ्करानुग्रहं विना ।
शिवनामस्मृतिफलं वक्तुमेव न शक्यते ।। 507

मादृशैरस्थिरस्वान्तैः शङ्करेण विना ध्रुवम् ।
अतः पञ्चाक्षरः शैवो जपनीयस्त्वया सदा ।। 508

शैवः पञ्चाक्षरी भव्यो मुक्तिदो जप्यते मया ।
शैवः पञ्चाक्षरो मन्त्रः शिवरूपः शिवप्रदः ।। 509

काश्यामन्तर्गृहे स्थित्वा जपनीयः प्रयत्नतः ।
न काशीसदृशं क्षेत्रं तत्राप्यन्तर्गृहं वरम् ।। 510

तत्रापि चोत्तमं ज्ञेयं ज्ञानवापीतटं शुभम् ।
तत्र जप्तो महामन्त्रः शैवोऽयं मोक्षदायकः ।। 511

तस्मान्मन्त्रवरः शैवः तत्र जप्यो मनुः सदा ।
पञ्चवक्त्रो दशभुजः सर्वदेवोत्तमः प्रभुः ।। 512

वेदोपगीतः सर्वज्ञः सोमसूर्याग्निलोचनः ।
गौरीभूषितवामाङ्गः कल्याणगुणसागरः ॥ 513

सर्वलोकपतिः श्रीमान् सर्वदेवान्वितो विभुः ।
निष्कलो निर्गुणो नित्यो निर्लिप्तो निरुपाधिकः ॥ 514

निरञ्जनो निराकारो निरवद्यो निरामयः ।
ज्योतिःस्वरूपो विमलश्चिद्घनः सकलात्मनः(कः) ॥ 515

एकः पूर्णः शिवः शान्तो मायातीतोऽक्षरः परः ।
इति ध्येयः सदा शम्भुरप्रमत्तैरहर्निशम् ॥ 516

पूजनीयः प्रयत्नेन प्रत्यहं विधिवज्जनैः ।
गण्डकी नाम विमला नदी यत्र मनोहरा ॥ 517

तत्र सोमेश्वरं नाम क्षेत्रमस्त्येकमुत्तमम् ।
तत्रैव शिवनामाख्याः शिलाः सन्ति शिवात्मिकाः ॥ 518

तत्पूजया महादेवः स साक्षात्पूजितो भवेत् ।
उन्मत्तमहिषाक्षाख्याः शिलाः सन्ति शिवात्मिकाः ॥ 519

तास्तु यत्नेन लब्धव्याः साक्षान्मोक्षप्रदायिकाः ।
तत्रैव शिवकुण्डाख्यमेकमस्ति शिवालयम् ॥ 520

तत्रैव शिवरूपास्ताः शिलाः सन्त्यमिताः शुभाः ।
कपिलं तच्छिलामूलं पार्श्वे श्यामैव सा शिला ॥ 521

उपर्युन्मत्तमहिषनेत्रसन्निभमुत्कटम् ।
शैवेषदरुणा भव्या(?) लिङ्गदेशे मनोहरे ॥ 522

तत्र शङ्करसान्निध्यं भवान्याश्च सदा ध्रुवम् ।
तादृशी यत्नतः साध्या शिला शङ्करसंश्रया ॥ 523

तत्रार्चितो महादेवः प्रीतो भवति सर्वथा ।
तत्राल्पापि कृता पूजा श्रद्धया तु शिवार्चकैः ॥ 524

सर्वपापहरा भव्या सैवाऽऽनन्त्याय कल्पते ।
शुद्धेन भस्मना नित्यं नवबिल्वदलैरपि ॥ 525

पूजा कार्या प्रयत्नेन तत्र शैवैः शिवार्चकैः ।
सा शिला शिवनामाख्या इति वेदैश्च गीयते ॥ 526

तदेव विमलं लिङ्गं मया सम्पूज्यते सदा ।
यस्त्वेतल्लिङ्गपूजायां प्रयतोऽत्र वसेन्नरः ॥ 527

न तस्य यातना घोरा भैरवी सा भविष्यति ।
काश्मीरलिङ्गप्रमुखान्यनेकान्यमलानि च ॥ 528

सन्ति तान्यपि पूज्यानि मुक्तिकामो यथोचितम् ।
ममत्वत्रैव सततं प्रीतिस्तिष्ठत्यनामया ॥ 529

मयैतदेव विमलं पूज्यते लिङ्गमुत्तमम् ।
ईदृशं दुर्लभं लोके लिङ्गं मोक्षप्रदायकम् ॥ 530

मयाप्येतत्प्रयत्नेन लब्धं लिङ्गमिदं पुरा ।
ईदृशं प्राप्यते लोके केनचित्तपसो बलात् ।। 531

ईदृशानि तु लिङ्गानि दुर्लभान्येव सर्वथा ।
एतल्लिङ्गस्य पूजायामधिकारी जितेन्द्रियः ।। 532

शिवैकशरणः शैवस्तदन्यो नैव सर्वथा ।
अत्राभिषेकः कर्तव्यो रुद्रसूक्तैरघापहैः ।। 533

बिल्वपत्रैर्नवैः शुद्धैः पूजा कार्या प्रयत्नतः ।
धूपदीपादिकं सर्वं शक्त्या कार्यं प्रयत्नतः ।। 534

पूजान्ते जपनीयोऽयं शैवः पञ्चाक्षरः सदा ।
ईदृशं लिङ्गमभ्यर्च्य यत्र तिष्ठति शाङ्करः ।। 535

तत्र विश्वेश्वरो नित्यं नृत्यत्यम्बासमन्वितः ।
एवं विष्णुवचः श्रुत्वा नागः कार्कोटकाभिधः ।। 536

ययौ सोमेश्वरं स्थानं शिवनाभि शिलाश्रयम् ।
शिवकुण्डे ततः शुद्धः प्रविश्य तपसो बलात् ।। 537

वहुकालं समालोड्य श्रान्तो नागाधिपस्तदा ।
अलब्ध्वा तादृशं लिङ्गमुक्तलक्षणसंयुतम् ।। 538

चकारोग्रं तपस्तत्र मामेवोद्दिश्य सादरम् ।
ततश्च मत्प्रसादेन लिङ्गं लब्ध्वैव तादृशम् ।। 539

आजगाम पुनः काशीं नागः पूर्णमनोरथः ।
ततः स विष्णुना साकमागत्यान्तर्गृहे शुभे ।। 540

तपः कर्तुं समारेभे पञ्चाक्षरपरायणः ।
वीरेशाद्दक्षिणे भागे विष्णुर्बिल्वसमन्वतः ।। 541

चकार चामलं कुण्डं निर्मलोदकमुत्तमम् ।
सोपानानि चकारात्र रत्नैरेव मनोहरैः ।। 542

ततस्तेनैव तत्तीरे कृता च मणिवेदिका ।
तत्र रत्नमयं लिङ्गं सर्वाघौघविनाशकम् ।। 543

विधिवत्स्थापयामास विष्णुः शिवपरायणः ।
ततस्तत्रैव विमले लिङ्गपार्श्वे जनार्दनः ।। 544

पञ्चाग्निमध्ये सततं तपः कर्तुं समारभे (प्रचक्रमे) ।
षट्कोटियुगपर्यन्तं चकारोग्रतरं तपः ।। 545

तल्लिङ्गपार्श्वे संविश्य निराहारो दृढासनः ।
पुनरेकाङ्घ्रिणा स्थित्वा प्रज्वाल्य च स पावकान् ।। 546

षट्कोटियुगपर्यन्तं तपश्चक्रे बलान्वितः ।
ततस्त्वधोमुखो भूत्वा तपस्तप्तं दुरासदम् ।। 547

षष्टिवत्सरपर्यन्तं ब्रह्ममानेन विष्णुना ।
ततस्तत्स्थापिते लिङ्गे प्रादुर्भूतोऽस्म्यहं शिवे ।। 548

ततो मां पूजयित्वैव स्तोत्रमेतच्चकार सः ।। 549

**विष्णुरुवाच** -

नमामि विश्वेश्वरमादिदेवं
नमामि विश्वोत्तममीशमेकम् ।
नमामि सर्वाधिकमप्रमेयं
नमामि शम्भुं गिरिजासहायम् ।। 550

नमामि कालान्तकमुग्रमीशं
नमामि खट्वाङ्गधरं महेशम् ।
नमामि सोमानलभास्कराक्षं
नमामि वाहीकृतसन्महोक्षम् ।। 551

नमामि सर्वाधिककण्ठभूषं
नमामि नानाविधदिव्यवेषम् ।
नमामि शुद्धोत्तमभूतिभूषं
नमामि संरक्षितभूतशेषम् ।। 552

नमामि सर्वाङ्गमवेद्यमाद्यं
नमामि मायारहितं विशुद्धम् ।
नमामि लोकैकनिदानभूतं
नमामि नानाविधसृष्टिहेतुम् ।। 553

नमामि नागेशसमर्चिताङ्घ्रिं
नमामि शुद्धेन्दुकलावतंसम् ।
नमाम्यनेकेन्दुरविप्रभासं
नमामि नित्यं करुणार्द्रभावम् ।। 554

नमामि रम्योत्तमवक्त्रचन्द्रं
नमामि दीर्घोरुहिरण्यबाहुम् ।
नमामि शान्ताच्छहिरण्यरूपं
नमामि दिव्योरुहिरण्यवर्णम् ।। 555

नमामि सोमं वृषराजकेतुं
नमामि शर्वं वरधर्मसेतुम् ।।
नमामि भीमं जगदेकनाथं
नमामि रुद्रं जनमोक्षहेतुम् ।। 556

नमामि वीरेश्वरमुग्रवीर्यं
नमामि देवं भवनीलकण्ठम् ।
नमामि सर्वार्तिहरं सुरेशं
नमामि दीर्घोरुजटाकलापम् ।। 557

शिव एव शरण्यपुण्यमूर्तिः
शिव एवाखिलदेवचक्रवर्ती ।

शिव एव विदारितामरार्तिः
शिव एवाखिलवेदगीतकीर्तिः ॥ 558

त्वदन्यं शरण्यं वरेण्यं न जाने
न जाने शिवामेयकुध्रेड्जजाने ।
त्वदन्यो न देवस्त्वदन्यो न देव-
स्त्वदन्यो न देवस्त्वदन्यो न देवः ॥ 559

त्वमेव प्रभुः सर्वलोकैकनाथ-
स्त्वमीशस्त्वमाराध्यभूतस्त्वमेव ।
त्वदन्यो न पूज्यस्त्वदन्यो न पूज्य-
स्त्वमेवासि पूज्यस्त्वमेवासि सेव्यः ॥ 560

त्वदन्यत्परं वस्तु नास्त्येव लोके
त्वदन्यो न वेदान्तवेद्यः परेशः ।
त्वमेवासि सर्वं त्वदन्यन्न किञ्चि-
द्ध्रुवं सत्यमेतद्ध्रुवं सत्यमेतत् ॥ 561

शिवात्परं नेति वदन्ति वेदाः
शिवात्परं नेति वदन्ति देवाः ।
शिवात्परं नेति वदन्ति सिद्धाः
शिवात्परं नेति वदन्ति शुद्धाः 562

शिव एवाखिलाराध्यः शिव एव जगत्प्रभुः ।
न शिवात्परमस्त्येकं सत्यं सत्यं मयोच्यते ।। 563

शिवाज्ञयैव सूर्योऽयं तपति प्रतिवासरम् ।
शिवाज्ञयैव चन्द्रोऽयं दीपयत्यखिला दिशः ।। 564

शिवाज्ञयैव शैलेन्द्राः फणिदिक्करिणः सदा ।
धृत्वा तिष्ठन्ति पृथिवीं भीत्या कम्पितमानसाः ।। 565

शिवाज्ञयैव नितरां प्रज्वलत्यनलः सदा ।
शिवाज्ञयैव वान्त्येते वायवः सुखहेतवः ।। 566

शिवस्यैव प्रसादेन देवेन्द्रः सर्वपालकः ।
शिवस्यैव प्रसादेन सर्जकोऽपि प्रजापतिः ।। 567

शिवस्यैव प्रसादेन मया प्राप्तं परं पदम् ।
शिवस्यैव प्रसादेन शम्भुः शम्भुत्वमाप्तवान् ।। 568

एवं स्तुत्वा हरिः शम्भुं मामेव शिवमव्ययम् ।
भूयः प्रणम्य बहुधा तस्थौ सन्नतकन्धरः ।। 569

ततश्च बहुकालीनघोरोग्रतपसा कृशम् ।
विष्णुं प्रत्युप्तममलमेतदेव वचो मया ।। 570

त्वत्कृतेनोग्रतपसा सन्तुष्टोऽस्मि जनार्दन ।
वृणु दास्ये वरं श्रेष्ठं स्तोत्रेण प्रीतमानसः ।। 571

इत्युक्तो भगवान् विष्णुः प्रणम्येशं कृताञ्जलिः ।
ययाचे वरमुत्कृष्टं शिवेभक्तिर्दृढास्त्विति ॥ 572

वरोत्तमं वरं देहि वरदोत्तम शङ्कर ।
अचञ्चला शिवे भक्तिर्ममास्त्विति पुनः पुनः ॥ 573

अक्षमेण मया देव स्वल्पमेव तपः कृतम् ।
प्रसन्नोऽसि कथं शम्भो करुणाकर शङ्कर ॥ 574

दीनबन्धो दयासिन्धो प्रसन्नोऽसि कथं मम ।
मया पूजाविधिः सम्यक् तव न ज्ञायते शिव ॥ 575

तव स्वरूपं न ज्ञातं तत्वतोऽमेयविक्रम ।
तादृशस्य ममाद्य त्वं प्रसन्नः कथमीश्वरः ॥ 576

वेदैरपि न ते तत्वं ज्ञातमस्ति महेश्वर ।
तादृशं शिवतत्वं ते कथं ज्ञेयं मयाधुना ॥ 577

त्वन्यः करुणासिन्धुर्लोके नास्त्येव सर्वथा ।
यदल्पेनापि तपसा प्रीतोऽसि भगवञ्शिव ॥ 578

त्वदन्यच्छरणं नास्ति त्वमेव शरणं मम ।
रक्ष रक्ष महादेव रक्ष रक्ष शिवापते ॥ 579

त्वदीयं पादकमलं निधेहि मम मूर्धनि ।
येन धन्यो भवाम्यद्य धन्यं मां कुरु शङ्कर ॥ 580

त्वदीयं पादकमलं दृढं बद्धं मया शिव ।
धन्योऽस्मि कृतकृत्योऽस्मि मत्तो धन्यो न विद्यते ।। 581

यन्न वेदपुराणाद्यैर्दृष्टंयत्पाद पङ्कजम् ।
तदेवाद्य मया दृष्टं भाग्यस्यान्तो न मे शिव ।। 582

यन्न सिद्धैर्मुनिवरैः कपिलाद्यैर्निरीक्षितम् ।
तादृशं शङ्करस्यैतद् दृष्टं पादाम्बुजं मया ।। 583

इत्युक्त्वा पतितं सद्यः पादमूले जनार्दनम् ।
उत्थाप्याङ्गं विमृश्याथ दत्ताश्च बहवो वराः ।। 584

वैकुण्ठाख्यं महास्थानं सृष्टं पूर्वं मया शिवे ।
तदाधिपत्यं सुखदं तदा दत्तं मया शुभे ।। 585

लोकान्धर्मेण सततं पालयेति परोऽपरः ।
दत्तस्तदैव सन्तोषाददेयो दुर्लभो मया ।। 586

तदानीं पूजयामास कमलैरमलैः स माम् ।
सहस्रनाममन्त्रैस्तु श्रद्धाभक्तिपुरः सरम् ।। 587

तद्भक्तिदर्शना(शोधना)र्थाय तदेकं कमलं मया ।
दूरीकृतं तदेकोनं नाम साहस्रकस्य च ।। 588

तदा विचार्य कमलमदृष्ट्वासौ जनार्दनः ।
स्वनेत्रकमलेनैव नामसङ्ख्यामपूरयत् ।। 589

तदात्यन्तमभूत्प्रीतिर्मम तस्मिन्वरानने ।
ततो नेत्रं मया दत्तं पुण्डरीकनिभं शुभम् ।। 590

पुण्डरीकाक्ष इत्येव नाम लब्धं च विष्णुना ।
तेन घोरतरं तप्तं तपस्तत्फलमीदृशम् ।। 591

तेनैव विष्णुना तत्र चक्रं लब्धं वरानने ।
सुदर्शनाख्यममलं कोटिसूर्यसमप्रभम् ।। 592

तेनैव सर्वशत्रूणां विनाशं स करिष्यति ।
पुरा मदङ्घ्रिलेखाभिः सृष्टं तच्चक्रमुत्तमम् ।। 593

वरोऽन्यो याचितस्तेन सर्वलोकहितावहः ।
इदं पापहरं भूयः कुण्डमस्तीति सादरम् ।। 594

इदं मणिगणाकीर्णं मणिकर्णिसमन्वितम् ।
मणिकर्णीति विख्यातिं कुण्डं यातु जगत्प्रभो ।। 595

अत्रैकमज्जनादेव मुक्ता यान्तु जनाः सदा ।
स्मरणेनापि पापानां विनाशो भवतु प्रभो ।। 596

यः करोति पितृश्राद्धमेतत्तीरे मनोहरे ।
यान्तु तत्पितरः सर्वे ब्रह्मलोकं महेश्वर ।। 597

अत्र यः शैवपुण्यात्मा तनुत्यागं करिष्यति ।
शैवं पञ्चाक्षरं तत्र स समाप्नोतु शङ्करम् ।। 598

ततश्च त्वत्प्रसादेन स मोक्षमधिगच्छतु ।
अक्लेशेनैव देवेश पुनरावृत्तिदुर्लभम् ॥ 599

इति पृष्टा वरास्तेन सर्वे दत्ता मया शिवे ।
तदा मन्दारकुसुमैरभूद्वृष्टिर्मनोहरा ॥ 600

वैकुण्ठलोकं संप्राप्य तदनु प्रीतमानसः ।
पूजयत्येव मां नित्यमभिवाद्य पुनः पुनः ॥ 601

अन्तर्गृहे वासमनन्यलभ्यं
लब्ध्वा तपस्यां यदि सावधानम् ।
करोति यः कश्चन शैववर्य-
स्तस्मै मया दीयते एवमिष्टः ॥ 602

॥ इति श्रीशिवरहस्ये सप्तमांशे शिवगौरीसंवादे
काशीमाहात्म्ये विष्णुवरप्राप्तिर्नाम
एकादशोऽध्यायः ॥



## ॥ द्वादशोऽध्यायः ॥

**श्रीशिव उवाच -**

काश्यमन्यन्महत्स्थानं केदाराभिधमुत्तमम् ।
तत्रापि लिङ्गमस्त्येकं केदारेश्वरनामकम् ॥

कुण्डमस्त्येकममलं तत्रैव विमलोदकम् ।
तत्र स्नात्वा विधानेन केदारेशं प्रपूजयेत् ॥

तत्रापि मुनयो भक्त्या कृत्वा मल्लिङ्गपूजनम् ।
तिष्ठन्ति कोटिशः शुद्धास्तपोध्यानपरायणाः ॥

तत्कुण्डस्नानमनिशं कर्तव्यं प्रीतिपूर्वकम् ।
तिलैस्तु पितरो नित्यं तर्पणीयाः प्रयत्नतः ॥

तत्कुण्डकुहरान्नित्यं सोत्साहं नागकन्यकाः ।
मत्प्रियार्थं समायान्ति नानाभरणभूषिताः ॥

सहस्रजिह्वः शेषोऽपि प्रत्यहं भक्तिपूर्वकम् ।
सबन्धुस्तेन मार्गेण समायाति मदर्चकः ॥

कार्कोटकोऽपि तेनैव मार्गेणायाति सादरम् ।
अन्येऽपि बहवो नागाः समायान्त्यनिशं मुदा ॥

तत्कुण्डद्वारि सततं तीक्ष्णशूलासिपाणयः ।
साष्टकोटगणाधीशास्तिष्ठन्ति क्रूरविक्रमाः ।। 8

तानग्रे पूजयित्वैव प्रसाद्य तदनन्तरम् ।
नागलोकात्समायान्ति सर्वे शेषादयः सदा ।। 9

मामभ्यर्च्य यथाशास्त्रं कृत्वा चान्तर्गृहादिकम्[1] ।
कुर्वन्ति कालनाथस्य पूजनं भक्तिपूर्वकम् ।। 10

नृत्यन्ति नाट्यनिपुणास्सर्वास्ता नागकन्यकाः ।
कुर्वन्ति नागममलं नागशास्त्रानुरोधतः ।। 11

नागचम्पकपुन्नागरत्नबिल्वादिमाधवैः ।
मामभ्यर्च्य पुनर्यान्ति पुनरायान्ति यान्ति च ।। 12

तस्य केदारनाथस्य श्रावणे सोमवासरे ।
पूजा कार्या विशेषेण साधनैर्विविधैः शुभैः ।। 13

सोमवारव्रतं कार्यं प्रयत्नेन यथाविधि ।
शक्तेनोपोषणं कार्यमन्यथा निशि भोजनम् ।। 14

तस्य दक्षिणदिग्भागे तिष्ठत्यर्कविनायकः ।
तस्मिन्नेव दिने सोऽपि पूजनीयः प्रयत्नतः ।। 15

---

1 अन्तर्गृहयात्रादिकं कृत्वेत्यर्थः ।

सर्वविघ्ननिवृत्त्यर्थं पूर्वमर्केण सादरम् ।
तपस्तप्तं महद्घोरमेकपादेन सादरम् ॥ 16

अर्केणैव कृतं कुण्डमेकं तिष्ठति निर्मलम् ।
तत्तु रत्नौघखचितसोपानैस्तेन निर्मितम् ॥ 17

लोलार्केशाभिधं लिङ्गं तत्रास्ति सकलार्थदम् ।
तत्पूजा विधिवत्कार्या भानुषष्ठि(?)दिने सुभे ॥ 18

तत्प्रान्ते सन्ति लिङ्गानि सर्वाभीष्टप्रदानि च ।
तेषामपि यथायोग्यं पूजा कार्या प्रयत्नतः ॥ 19

सिद्धेश्वराभिधं लिङ्गं काश्यां तिष्टति कामदम् ।
तत्र पूजा विधानेन कर्तव्या प्रत्यहं जनैः ॥ 20

तत्रैव पूज्याविमला तिष्ठत्यमललोचने ।
सर्वदुर्गहरा नित्यं स्वभक्ताभयदायिनी ॥ 21

अश्विनीशुक्लपक्ष-(आश्वयुवच्छुक्लपक्ष)प्रतिपत्प्रभृति प्रिये ।
नवमीदिनपर्यन्तं पूजा कार्या प्रयत्नतः ॥ 22

सा सर्वार्तिहरा देवि नित्यं काशीनिवासिनाम् ।
पूजिता भक्तवरदा भवत्येव न संशयः ॥ 23

अत्रैवामृतकुण्डाख्यं तीर्थमस्त्येकमुत्तमम् ।
तत्र स्नानेन दुःखानि न भविष्यन्ति सर्वथा ॥ 24

कामाक्षीस्थानमनघमेकमस्ति वरानने ।
तत्र कुण्डमभूद्दिव्यं तज्जलं चामृतोपमम् ।। 25

तत्रापि श्रावणे मासे प्रत्यहं विधिवज्जनैः ।
पूजा कार्या विधानेन सर्वथा भौमवासरे ।। 26

तत्रापि शिवलिङ्गानि सन्ति कोट्यवधि प्रिये ।
कुण्डान्यपि मनोज्ञानि निर्मलानि भवन्ति हि ।। 27

तान्यपि श्रद्धया नित्यं पूजनीयानि यत्नतः ।
निर्मलेषु च कुण्डेषु स्नानं कार्यं यथाविधि ।। 28

आदिढुण्ढीश्वरो नाम गणेशस्तिष्ठति प्रिये ।
सर्वविघ्नहरो नित्यं सर्वाभीष्टप्रदायकः ।। 29

प्रतिशुक्लचतुर्थ्यां तु सदूर्वालड्डुकादिभिः ।
पूजनीयः प्रयत्नेन काशी वासेप्सुभिर्नरैः ।। 30

कालेश्वराभिधं लिङ्गमेकमस्ति वरानने ।
तत्पूजा सर्वथा कार्या प्रत्यहं विधिवज्जनैः ।। 31

गोकर्णाभिधमस्त्येकं लिङ्गं पापौघनाशनम् ।
तत्रापि कुण्डमस्त्येकं तत्र स्नानमघापहम् ।। 32

शिवरात्रिदिने तत्र स्नानं कार्यं प्रयत्नतः ।
तल्लिङ्गपूजनं चापि कर्तव्यं तद्दिने शुभे ।। 33

दिव्यलिङ्गान्यनन्तानि काश्यां तिष्ठन्ति सर्वथा ।
तेषां प्रभावः केनापि वक्तुमेव न शक्यते ।।

अग्रेऽपि मुनिभिर्दिव्यैर्भौमैश्च कमलानने ।
स्थापनीयानि लिङ्गानि काश्यामन्यैरपि ध्रुवम् ।।

कुण्डान्यपि च कार्याणि तैरेव मुनिसत्तमैः ।
तपश्चर्यां करिष्यन्ति तथैवात्र सदा शुभे ।।

इतः शतोत्तरे कल्पे कन्या हिमवतः शुभे ।
भविष्यत्यमला साध्वी रूपलावण्यशोभिता ।।

शिवपत्नीभवामीति मामुद्दिश्य वसाशु भोः ।
पञ्चाग्निमध्यसंविष्टा तपश्चर्या करिष्यति ।।

द्वात्रिंशत्कल्पपर्यन्तं तपः कृत्वाऽतिदारुणम् ।
वह्निमध्यगता साध्वी जले कृत्वा तपः पुनः ।।

ततः कदाचिद्यत्नेन ब्रह्मलोकं गमिष्यति ।
ब्रह्मादयोऽपि तां दृष्ट्वा भविष्यन्त्येव मोहिताः ।।

ततस्तेभ्योऽपि विमला शापं दास्यति दारुणम् ।
शिवसायुज्यरूपो वो मोक्षो मास्त्विति सा प्रिये ।।

मदीयं रूपममलं सर्वेषां मोहकारणम् ।
त्यक्ष्याम्येतदिति प्रीत्या जलरूपा भविष्यति ।।

ततस्तज्जलमालोक्य ब्रह्मा विस्मयसंयुतः ।
वारुणैर्बहुभिः पाशैर्निरोधं च करिष्यति ॥ 43

ततः पूर्वकृतानल्पतपसा तदनुग्रहात् ।
जलरूपैव सा भव्या काशीमायास्यति प्रिये ॥ 44

स्वतः प्रचलितां दृष्ट्वा तदा ब्रह्मादयः सुराः ।
गङ्गा गङ्गेति सर्वेऽपि प्रवदिष्यन्ति तां शुभाम् ॥ 45

तदा प्रभृति गङ्गेति नाम तस्या भविष्यति ।
पावयिष्यति सा लोकान् स्मृताऽप्यघविनाशिनी ॥ 46

सापि काश्यां स्वनाम्नैव लिङ्गं संस्थाप्य सादरम् ।
ज्ञानवापीतटे रम्ये च तपश्चर्यां करिष्यति ॥ 47

काशीं संप्राप्य विमलामनर्घ्यां शिवरूपिणीम् ।
तपश्चर्यां विना लोके कःस्थास्यति वरानने ॥ 48

तत्काशीक्षेत्रमालोक्य बालकस्यापि सर्वथा ।
तपश्चर्यारतिः शुद्धा भवत्येव न संशयः ॥ 49

काश्यां तु बहवो विघ्नाः काशीवासवियोजकाः ।
तच्छान्त्यर्थं ढुण्ढिराजः पूजनीयः प्रयत्नतः ॥ 50

अष्टोत्तरशतं दिव्यैर्गणेशस्यैव नामभिः ।
कर्तव्यमतियत्नेन नवदूर्वाङ्कुरार्पणम् ॥ 51

हिरण्मयतनुं शुद्धं सर्वार्तिहरमव्ययम् ।
वरदं गणपं ध्यात्वा पूजा कार्या प्रयत्नतः ।।

ऋषिर्विघ्नेश इत्यादिनाम्नां सर्वेश्वरः शिवः ।
देवता विघ्नराजोऽत्र छन्दोऽनुष्टुप् शुभप्रदम् ।।

सर्वप्रत्यूहशमनं फलं शक्तिः सुधात्मिका ।
कीलकं गणनाथस्य पूजा कार्येति कामदा ।।

विघ्नेशो विश्ववरदो विश्वचक्षुर्जगत्पतिः ।
हिरण्यरूपः सर्वात्मा ज्ञानरूपो जगन्मयः ।।

सर्वज्ञः सर्वगः शान्तो गजास्यो विगतज्वरः ।
विश्वमूर्तिरमेयात्मा विश्वाधारः सनातनः ।।

सामगानप्रियो मन्त्री सत्वाधारः सुराधिपः ।
समस्तसाक्षी निर्द्वन्द्वो निर्लिप्तोऽमोघविक्रमः ।।

नियतो निर्मलः पुण्यकामदः कन्तिदः कविः ।।

कामरूपी कामवेषो कमलाक्षः कलाधरः ।
सुमुखः सर्वदः शुद्धो मूषिकाधिपवाहनः ।।

दीर्घतुण्डधनुः श्रीमाननन्तो मोहवर्जितः ।
वक्रतुण्डः शूर्मकर्णो परमः पावनेश्वरः ।।

योगीशो योगवन्द्याङ्घ्रिरुमाजनुरयापहः ।
एकदन्तो महाग्रीवः शरण्यः सिद्धसेवितः ।। 61

सिद्धिदः करुणासिन्धुः भगवान् भव्यविग्रहः ।
विकटः कपिलो ढुण्ठिरुग्रो भीमोदरः शुभः ।। 62

गणाध्यक्षो गणाराध्यो गणेशो गणनायकः ।
ज्योतिः स्वरूपो भूतात्मा धूमकेतुरनाकुलः ।। 63

कुमारगुरुरानन्दो हेरम्बो वेदसंस्तुतः ।
नागोपवीती दुर्धर्षो बालदूर्वाङ्कुरप्रियः ।। 64

फालचन्द्रो विश्वधामा शिवपुत्रो विनायकः ।
लीलावलम्बितवपुः पूर्णः परमसुन्दरः ।। 65

विघ्नान्धकारमार्ताण्डो विघ्नारण्यदवानलः ।
सिन्धूरवदनो नित्यो प्रभुः प्रथमपूजितः ।। 66

शरण्यदिव्यपादाब्जो भक्तमन्दारभूरुहः ।
रत्नसिह्मासनासीनो मणिकुण्डलमण्डितः ।। 67

भक्तकल्याणदोऽमेयः कल्याणगुणसंश्रयः ।
एतानि दिव्यनामानि गणेशस्य महात्मनः ।। 68

पठनीयानि यत्नेन सर्वथा सर्वदेहिभिः ।
नाम्नामेकैकमेतेषां सर्वसिद्धिप्रदायकम् ।। 69

सर्वविघ्नेशनाम्नां तु फलं वक्तुं न शक्यते ।
एकैकमेव तन्नाम दिव्यं जप्त्वा मुनीश्वराः ॥ 70

प्रत्यूहमात्ररहितास्तिष्ठन्ति शिवपूजकाः ।
दूर्वायुग्मानि सङ्गृह्य नूतनान्यतियत्नतः ॥ 71

पूजनीयो गणाध्यक्षो नाम्नामेकैकसङ्ख्यया ।
नभस्यशुक्लपक्षस्य चपुर्थ्यां विधिपूर्वकम् ॥ 72

वक्रतुण्डेशकुण्डे तु स्नानं कृत्वा प्रयन्नतः ।
वक्रतुण्डेशमाराध्य सर्वाभीष्टप्रदायकम् ॥ 73

ध्यायेदघहरं शुद्धकाञ्चनाभमनामयम् ।
ततः पूजां यथाशास्त्रं कृत्वा दूर्वाङ्कुरैर्नवैः ॥ 74

पूजा कार्या विशेषेण नामोच्चारणपूर्वकम् ।
ततश्च मोदकैर्दिव्यैः सुगन्धिघृतपाचितैः ॥ 75

नैवेद्यं कल्पयेद्दिव्यः गणेशाय शुभावहम् ।
अन्यैश्च परमान्नाद्यैर्भक्ष्यैर्भोज्यैर्मनोहरैः ॥ 76

तोषणीयः प्रयत्नेन वक्रतुण्डविनायकः ।
प्रदक्षिणनमस्कारैर्दिव्यैस्तन्नामसङ्ख्यया ॥ 77

कर्तव्या नियतं शुद्धैर्मौनव्रतपरायणैः ।
ततः सन्तर्प्य विधिच्छैवान्ब्राह्मणसम्भावान् ॥ 78

पुनरभ्यर्च्य विघ्नेशमिमं मन्त्रमुदीरयेत् ।। 79

अथ मन्त्रः -

वक्रतुण्ड सुराराध्य सूर्यकोटिसमप्रभ ।
निर्विघ्नेनैव सततं काशीवासं प्रयच्छ मे ।। 80

इति संप्रार्थ्य विधिवत्पूजां कृत्वा पुनर्मुदा ।
नमस्कृत्वा प्रसाद्यैनं गच्छेड्ढुण्ढिविनायकम् ।। 81

ढुण्ढिराजार्चनं सम्यक्कर्तव्यं विधिपूर्वकम् ।
तत्रैवार्चाविशेषेण पूजां कृत्वा ततः परम् ।। 82

पूजनीयाः प्रयत्नेन सर्वथा मोदकप्रियाः ।
शिवप्रीतिकरा नित्यं शुद्धाः पञ्चविनायकाः ।। 83

क्षिप्रसिद्धिकरं क्षिप्रं गणेशं सुरवन्दितम् ।
सम्पूज्य पूर्ववत्सम्यग्जगदीशं विनायकम् ।। 84

आशाविनायकं सम्यक्पूजयित्वा ततःपरम् ।
अर्कविघ्नेश्वरं(:) सम्यक्पूजनीयः प्रयत्नतः ।। 85

पूर्ववत्पूजयित्वा तु तत्र सिद्धिविनायकम् ।
पूजनीयस्ततः सम्यक् चिन्तामणिविनायकः ।। 86

सेनाविनायकोऽप्येवं सम्पूज्य तदनन्तरम् ।
दुर्गाविनायकस्यापि पूजा कार्या ततः परम् ॥ 87

एवं संपूज्य विधिवद्भक्तिश्रद्धासमन्वितैः ।
शैवाः शङ्करतत्वज्ञा भोजनीयाः प्रयत्नतः ॥ 88

एवं सम्पूजिताः सम्यक्प्रीतास्ते गणनायकाः ।
काशीवासं प्रयच्छन्ति निर्विघ्नेनैव सादरम् ॥ 89

आज्येन कापिलेनैव सार्धलक्षत्रयाहुतीः ।
हुत्वैतन्नामभिः सम्यक्सर्वविद्याधिपो भवेत् ॥ 90

एतानि दिव्यनामानि प्रतिवासरमादरात् ।
पठित्वा गणनाथस्य पूजा कार्या प्रयत्नतः ॥ 91

यस्य कस्यापि सन्तुष्टो गणपः सर्वसिद्धिदः ।
अत एव सदा पूज्यो गणनाथो विचक्षणैः ॥ 92

गणेशादपरो लोके विघ्नहर्ता न विद्यते ।
तस्मादन्वहमाराध्यो गणेशः सर्वसिद्धिदः ॥ 93

काशीनिवाससिध्यर्थं विष्णुना पूजितः पुरा ।
पुरा विघ्नेश्वरः सम्यक्पूजितो दण्डपाणिना ॥ 94

कार्कोटकेण नागेन गणेशः पूजितः पुरा ।
शेषेण पूजितःपूर्वं गणेशः सिद्धिदायकः ॥ 95

काशीयात्रार्थमुद्युक्तो विधिर्विघ्नकुलाकुलः ।
पूजयामास विघ्नेशं विधिवद्भक्तिपूर्वकम् ॥ 96

सूर्येणाभ्यर्चितं पूर्वं चन्द्रेणेन्द्रेण च प्रिये ।
देवैरन्यैश्च विधिवत्पूजितो गणनायकः ॥ 97

मर्त्यानाममराणां च मुनीनां च वरानने ।
न सिध्यन्त्येव कार्याणि गणेशाभ्यर्चनं विना ॥ 98

काशी यात्राविधिं वक्ष्ये शृणुसादरमम्बिके ।
नियमा बहवः सन्ति काशीयात्रारतात्मनाम् ॥ 99

ब्रह्मक्षत्रियविट्च्छूद्रैः स्वस्ववृत्त्या यथोचितम् ।
न्यायेनैव धनं सम्यगार्जनीयं प्रयत्नतः ॥ 100

ब्राह्मणैः शुक्लवृत्त्यैव कर्तव्यो धनसङ्ग्रहः ।
शूद्रद्रव्यं न गृह्णीयाद्राजद्रव्यं च वर्जितम् ॥ 101

अयाच्ञयैव विप्रैश्च अयाच्ञाजीविभिद्विजैः ।
दत्तमल्पमनल्पं वा ग्राह्यं वित्तं द्विजोत्तमैः ॥ 102

गृहीत्वा तत्त्रिधाकृत्वा भागेनैकेन सादरम् ।
श्राद्धं कार्यं प्रयत्नेन ततो मुण्डनपूर्वकम् ॥ 103

कालभैरवमुद्दिश्य तदन्येऽपिद्विजोत्तमाः ।
भोजनीयाः प्रयत्नेन शैवा एव शिव प्रियाः ॥ 104

भोजनीयाः प्रयत्नेन मदर्थमपि शाङ्कराः ।
ततो गणेशमुद्दिश्य भोजनीयाः शिवद्विजाः ।। 105

ततश्चदुर्गां सम्पूज्य सर्वदुर्गविनाशिनीम् ।
पुनर्मल्लिङ्गममलं पूजनीयं प्रयत्नतः ।। 106

द्विजेभ्यो बन्धुवर्गेभ्यः प्रतिगृह्याशिषस्ततः ।
शिष्टं धनं गृहीत्वैव द्विजः सन्तुष्टमानसः ।। 107

पूर्णकुम्भं द्विजं लिङ्गं पूज्य कन्याद्वयं तथा ।
दधिक्षीरफलान्नादि कृत्वाग्रे यत्नपूर्वकम् ।। 108

ततस्त्वयं समुच्चार्यो मन्त्रः सर्वार्थसाधकः ।
पूजयित्वा विशेषेण लिङ्गरूपिणमीश्वरम् ।। 109

शिव गौरीपते श्रीमन् भक्तवत्सल शङ्कर ।
काशीयात्रां करिष्येऽहं निर्विघ्नं कुरु सर्वदा ।। 110

**अथ गणेश मन्त्रः -**

विघ्नेश भक्तवरद विघ्नराज गणाधिप ।
काशीयात्रां करिष्येऽहं निर्विघ्नं कुरुसर्वदा ।। 111

**अथ भैरव मन्त्रः -**

कालभैरव सर्वात्मन् कालनाशकर प्रभो ।
काशीयात्रां करिष्येऽहं निर्विघ्नं कुरु सर्वदा ।। 112

जय दुर्गे जगद्वन्द्ये जय दुर्गे शिवप्रिये ।
काशीयात्रां करिष्येऽयं निर्विघ्नं कुरु सर्वदा ॥ 113

ततो मां वृषभारूढं दिव्यमङ्गलविग्रहम् ।
मुक्तादामपरीताङ्गं मङ्गलप्रदमुत्तमम् ॥ 114

गौरीभूषितवामाङ्गमभयप्रदसत्तमम् ।
ध्यात्वा सम्यक्ततो गच्छेदन्यग्रामं शुभे दिने ॥ 115

निराहारेण निर्गच्छेन्मौनव्रतपरायणः ।
अगृहीत्वोपानह्यादीन्कीटानस्पृश्य भूगतान् ॥ 116

शिव गोरीपते श्रीमन् विश्वनाथ सदाशिव ।
कल्याणदेति सततं स्मरन् मन्त्रमिमं जपन् ॥ 117

अदूरग्राममाश्रित्य प्रथमे दिवसे शुचिः ।
पुनः शुद्धान्वरान् शैवान्भोजयित्वा यथाविधि ॥ 118

भोक्तव्यं नियमेनैव स्वेन शिष्टं ततःपरम् ।
सायमभ्यर्च्य विधिना शिवं सन्ध्यादिपूर्वकम् ॥ 119

याममात्रं शिवध्यानं कर्तव्यं विधिपूर्वकम् ।
ततो निद्रा यथायोगं कर्तव्या विधिपूर्वकम् ॥ 120

सम्प्रोक्ष्य भुवमत्यल्पान्कुशानास्तीर्य सादरम् ।
एकाकिनैव नियतं निद्रा कार्या प्रयत्नतः ॥ 121

ततश्च पश्चिमे यामे निद्रां त्यक्त्वा ततः परम् ।
कृत्वा शौचादिकं सम्यक् ध्यात्वा मां परमेश्वरम् ।। 122

स्नानादिकं ततः कार्यं लिङ्गं पूज्य विशेषतः ।
विघ्नेशं भैरवं दुर्गां सम्पूज्य तदनन्तरम् ।। 123

शैवान् सम्पूज्यविधिवत् ततोगच्छेद्यथाविधि ।
ध्यात्वा हृदि शिवं सम्यग्जपन् पञ्चाक्षरं शुभम् ।। 124

काशीमार्गगतैर्मर्त्यैर्न ग्राह्ये यानपादुके ।
यात्राफल चतुर्थांशो नष्टःस्यात्पादुकादिभिः ।। 125

अर्धं नश्यत्यश्वयानाद्यात्राफलमनुत्तमम् ।
काष्ठखड्गादियानैस्तु(?) सर्वं नश्यति तत्फलम् ।। 126

मार्गे विलोक्य कीटादीन्गन्तव्यमतियत्नतः ।
नोचेद्यात्राफलं न्यूनं भविष्यति न संशयः ।। 127

यात्राकाले विशेषेण यस्य कस्यापिदेहिनः ।
न देयान्येव दुःखानि विचार्य विधिमादरात् ।। 128

मौनमेव सदाकार्यं कर्तव्यं शिवचिन्तनम् ।
अनृतं नैववक्तव्यं कदाचिदपि सर्वथा ।। 129

निन्दाऽन्यस्य न कर्तव्या न श्रोतव्या च सर्वथा ।
नग्नां स्त्रियं न वीक्षेत स्वीयामपि कदाचन ।। 130

ऋतुकालेऽपि संप्राप्ते स्वस्त्रिया सह सर्वथा ।
नैकत्र शयनं कार्यं ब्रह्मचर्यव्रतं चरेत् ॥ 131

प्रतिग्रहो न कर्तव्यो यात्राकालेषु सर्वथा ।
नाऽशैवैरपि भाषेत प्रमादेनापि सर्वथा ॥ 132

अशैव पतितव्रात्य चण्डालम्लेच्छपुल्कसैः ।
कदाचिदपि यात्रायां नाभिभाषेत सर्वथा ॥ 133

कदाचिच्चेत्प्रमादेन यदि दृष्टा नराधमाः ।
तदा शिव शिवेत्युक्त्वा भानुंपश्येद्यथाविधि ॥ 134

प्रमादेन कदाचित्तैः स्पृष्टश्चेद्वसनादिकम् ।
स्नानं कार्यं विधानेन मृत्तिकास्नानपूर्वकम् ॥ 135

रुद्राध्यायस्यचावृत्तिः कर्तव्या विधिपूर्वकम् ।
ततो रुद्राक्षभस्मादि धृत्वा गच्छेद्यथाविधि ॥ 136

एवं प्रयत्नतो नित्यं गन्तव्यं विधिपूर्वकम् ।
यात्राफलेप्सुभिर्मर्त्यैः शैवैः शिवपरायणैः ॥ 137

कालत्रयेऽपि कर्तव्यं शिवलिङ्गस्य पूजनम् ।
मध्याह्ने शिवतुष्ट्यर्थं भोजनीयाः शिवार्चकाः ॥ 138

ततः शिवकथाः श्राव्याः श्रोतव्याः पापनाशिकाः ।
आसायमतियत्नेन ततः सन्ध्याशिवार्चनम् ॥ 139

एवं यात्रारतैः शैवैर्मद्भक्तैस्तु पदे पदे ।
अश्वमेधफलं पूर्णं प्राप्यते नात्र संशयः ॥ 140

यथा यात्रापरं शैवं दृष्ट्वा तत्पितरः प्रिये ।
अत्यन्तं मोदमानास्ते नृत्यं कुर्वन्ति यत्नतः ॥ 141

नरके पतितानस्मानुद्धरिष्य त्ययं सुतः ।
काश्यां श्राद्धं विशेषेण करिष्यति न संशयः ॥ 142

ज्ञानवापीजलं रम्यं ध्रुवकृतामृतमुत्तमम् ।
दास्यत्यस्मभ्यममलमयं नास्त्यत्र संशयः ॥ 143

ज्ञानवापीतटे रम्ये सोऽयमस्मभ्यमादरात् ।
श्राद्धं कृत्वा विधानेन पिण्डदानं करिष्यति ॥ 144

स्नात्वाऽयं शिवगङ्गायां वंशोद्धारकरः सुतः ।
श्राद्धं कृत्वा विधानेन पिण्डदानं करिष्यति ॥ 145

अयं कार्कोटके कुण्डे विषदुःखविनाशके ।
स्नात्वा श्राद्धं पिण्डदानं करिष्यति न संशयः ॥ 146

श्रीमदोङ्कारकुण्डेऽपि स्नात्वा श्राद्धं करिष्यति ।
पिण्डदानमयं कृष्णतिलैः सार्धं करिष्यति ॥ 147

केदारकुण्डे विमले पिण्डदानं करिष्यति ।
जलं कृष्णतिलैः सार्धं बहुदास्यत्यसंशयम् ॥ 148

पद्भ्यां वा यज्जलं स्पृष्ट्वा काशीस्थमघनाशनम् ।
दास्यत्यक्षय्यममलं दुःखं त्याज्यं ततः परम् ॥ 149

काश्यां तु लीलया वायं मृत्पिण्डं च कदाचन ।
दास्यत्येव न सन्देहः पितॄनुद्दिश्य दुःखदम् ॥ 150

अस्मद्गोत्र समुत्पन्नः काशीं यास्यत्ययं मुदा ।
अस्माभिः सावधानेन रक्षणीयः प्रयत्नतः ॥ 151

एतस्य कीटकादिभ्यो यथा दुःखं न जायते ।
तथा प्रयत्नतः सम्यग्रक्षणीयोऽयमादरात् ॥ 152

अत्यल्पैरेव दिवसैरघोरनरकादयम् ।
उद्धरिष्यति दत्वास्मान्काशीस्थजलमेव वा ॥ 153

का घोरयातना भीतिरयमत्कुलोद्भवः ।
काशीं गच्छति तत्रायं सम्यक् श्राद्धं करिष्यति ॥ 154

नास्मन्मार्गे समायान्तु यमदूता भयानकाः ।
अयं गच्छति मद्वंश्यः काशीं प्रति शिवार्चकः ॥ 155

माऽऽयान्तु सर्वथाऽस्माकं निकटे यमकिङ्कराः ।
अयमस्मत्कुलोद्भूतः काशीं प्रति गमिष्यति ॥ 156

कस्यचित्पितरः पूर्वं नरके पतिताः स्थिताः ।
घोराण्यनन्तपापानि तैःकृतानि पुरा बलात् ॥ 157

कैश्चिद्धेनुसहस्राणि निहतानि दिने दिने ।
गोमांसमेव बहुधा भक्षितं तैरहर्निशम् ।। 158

ब्रह्महत्यासहस्राणि गोहत्यानां शतानि च ।
अश्वहत्यासहस्राणि पुरा तेन कृतानि हि ।। 159

यावज्जीवं कदाचिद्वा तेनैव हि दुरात्मना ।
विप्रजन्मापि सम्प्राप्य न स्नातं तीर्थवारिणा ।। 160

सन्ध्या न वन्दिता तेन सर्वपापापनोदिनी ।
न जप्तैव हि गायत्री निर्मला सा शिवात्मिका ।। 161

सर्वपापहरं शुद्धं भसितं सितमुत्तमम् ।
न धृतं विधिवत्तेन शिवमन्त्राभिमन्त्रितम् ।। 162

क्षणे क्षणेऽपि रुद्राक्षाधृताः पापविनाशकाः ।
तेन पापात्मना शुद्धालीलयापि न ते धृताः ।। 163

सर्वार्थदायकं नित्यं विहितं लिङ्गपूजनम् ।
सर्वाघशामकं तेन न कृतं च कदाचन ।। 164

बिल्वैर्मनोहरैः शुद्धैः कोमलैः शिवसम्मतैः ।
न कृतं पूजनं शम्भोस्तेनैव हि कदाचन ।। 165

धूपदीपादिभिः सम्यक्तेन नाभ्यर्चितः शिवः ।
अर्चितं शिवलिङ्गं चाप्यनेनेन न निरीक्षितम् ।। 166

प्रणामो दण्डवद्भूमावेको वा पापनाशकः ।
शिवार्चनं कृतं तेन कदाचिदपि सादरम् ।। 167

नृत्यप्रदक्षिणाद्यैश्च सर्वपापविनाशकैः ।
नाराधितो महादेवस्तेनैव हि दुरात्मना ।। 168

वेदोपगीतममलं मोक्षप्रदमनुत्तमम् ।
शिवनाम शिवाकारं न जप्तं तेन सर्वथा ।। 169

स्वहृत्सिह्मासनारूढं कृत्वा देवोत्तमं शिवम् ।
ध्यानं च न कृतं तेन कदाचिदपि सर्वथा ।। 170

दिव्याः शिवकथाः श्राव्याः सर्वपापापनोदकाः ।
तेनैव पापरूपेण कदाचिदपि न श्रुताः । 171

शिवलिङ्गार्चकैः शुद्धैः शैवैः शिवपरायणैः ।
मैत्री च न कृता तेन शैवा नाभ्यर्चिताः पुरा ।। 172

शिवतीर्थाटनं शुद्धमघघ्नं च क्षणेक्षणे ।
कदाचिदपि तेनैव न कृतं पापकारिणा ।। 173

शिवालयस्य निर्माणं स्वर्गादिफलसाधनम् ।
न कृतं तेन दुष्टेन धनिनापि कदाचन ।। 174

ईदृशा बहवो नष्टास्तत्रैव परितः स्थिताः ।
तेषामघोरनरके वासःक्षणमभूत्पुरा ।। 175

आचन्द्रार्कमघोरेषु नरकेषु कदा स्थितः ।
अनेकब्रह्मकल्पैर्वा न भविष्यति सर्वथा ।। 176

तत्कृतानेकपापानां निष्कृतिः शास्त्रमार्गतः ।
बहुकालमनेकेषु नरकेष्वेव सर्वदा ।। 177

वसतिः सम्मता तेषामशैवानां दुरात्मनाम् ।
ततस्तद्वंशजः शुद्धः शैवः शिवपरायणः ।। 178

अयाचितव्रतेनैव वसन्नियमपूर्वकम् ।
न्यायेनाल्पं धनं शुद्धं सम्पाद्य तदनन्तरम् ।। 179

काशीं गन्तुं समुद्युक्तो व्रती नियममास्थितः ।
काशीमुद्दिश्य नियमात्क्लेशार्थं समुपागतः ।। 180

तदा तत्पितरः सर्वे नरकेभ्यो विनिर्गताः ।
तेन काश्यां ज्ञानवाप्यां पिण्डदानं कृतं ततः ।। 181

तेन तत्पितरः सर्वे ब्रह्मलोकं ययुर्मुदा ।
अस्माभिरुच्यते तत्तु भवतां किं न संस्मृतिः ।। 182

चिन्तयन्तु न संस्कारो लुप्तः स भवतां ध्रुवम् ।
मया तु निकटे यूयमस्माकं यमकिङ्कराः ।। 183

तद्विचार्यैव बहुधा दूरं यान्त्वतिशीघ्रतः ।
यद्यस्मन्निकटे यूयमायास्यन्ति(थ) तदा यमः ।। 184

भवतां रक्षणं शास्ता न करिष्यति सर्वथा ।
यान्तु दूरं यमभटाः सशस्त्राः क्रूरविग्रहाः ।। 185

काशीं गच्छति तीव्रेण मद्वंश्यः पुरुषर्षभः ।
मा दर्शयन्तु शस्त्राणि तूष्णीं तिष्ठन्तु दूरतः ।। 186

अयं मद्वंशजो धन्यः काशीं प्रति गमिष्यति ।
वक्तव्योऽद्य यमोऽस्माभिर्मद्वंश्यः शैवपुङ्गवः ।। 187

काशीं गच्छति तीव्रेणेत्यतो यान्तु यमप्रियाः ।
यमोऽप्यस्मद्वचः श्रुत्वा भीतिं यास्यत्यसंशयम् ।। 188

भवन्तो दूरतो यान्तु प्राणेषु यदि वः स्पृहा ।
इदानीमेव शमनः समायास्यति सादरम् ।। 189

पूजामस्मभ्यममलः करिष्यति न संशयः ।
शैवो मद्वंशजः सम्यक्काशीं गच्छति सादरः ।। 190

पूर्वमस्मत्कृताः सर्वे दग्धाः पातककोटयः ।
इति तत्पितरः सर्वे वदन्तः सादरं मुहुः ।। 191

नृत्यं कुर्वन्ति सततं प्रस्तुवन्ति च तादृशम् ।
एवं नियममासाद्य काशीं सम्प्राप्य सादरम् ।। 192

काशीं सम्प्राप्य विधिवत्कुर्यात्तदनु मुण्डनम् ।
दण्डपाणिप्रसादेन तस्मिन्नेव दिने शुभे ।। 193

स्नानं कार्यं प्रयत्नेन ज्ञानवापीजले शुभे ।
आमद्रव्येण विधिवच्छ्राद्धं कर्तव्यमादरात् ।। 194

हिरण्येनाथवा श्राद्धं कुर्यात्तद्दिन एव हि ।
हव्यश्यामाकनीवारयवचूर्णादिभिः क्रमात् ।। 195

पिण्डदानं यथाशास्त्रं कर्तव्यं नियमेन च ।
पितुः पिण्डत्रयं देयं मातुरप्यादरात्तथा ।। 196

अन्येषां तु यथा योग्यमेकैकं स्याद्यथाक्रमम् ।
ततः कृष्णतिलैः शुद्धैः कृत्वा तु पितृतर्पणम् ।। 197

ज्ञानवापीं समभ्यर्च्य ज्ञानेशं च समर्चयेत् ।
विनायकान् ढुण्ढिराजं समभ्यर्च्य ततः परम् ।। 198

मुक्तिमण्डपमासाद्य ध्यात्वा मामजमव्ययम् ।
नन्दिकेशं समभ्यर्च्य द्वारपालानपि क्रमात् ।। 199

ततो मत्पूजनं कार्यं स्वशक्त्या च यथाविधि ।
ततो वीरेशकुण्डादौ स्नानं कृत्वा यथाक्रमम् ।। 200

श्राद्धं पिण्डप्रदानादि कर्तव्यं विधिपूर्वकम् ।
श्राद्धावशिष्टान् द्वित्रान्वा भक्षयित्वा तिलांस्ततः ।। 201

कुर्याज्जागरणं सम्यङ्निराहारेण सादरम् ।
ततस्तु पश्चिमे यामे पञ्चक्रोशाद्बहिर्व्रजेत् ।। 202

कृत्वा शौचादिकं तत्र यथाशास्त्रं यथाविधि ।
ततः काश्यां समागम्य स्नात्वा तीर्थोदके शुभे ॥ 203

सन्ध्यादिनित्ययात्रान्तं कर्म कृत्वा यथाक्रमम् ।
शैवान्द्विजवरान् श्रेष्ठानाहूय शिवविग्रहान् ॥ 204

तेषामामन्त्रणं देयं यथाशास्त्रं यथाक्रमम् ।
ततः स्नात्वा विधानेन श्राद्धं कार्यं प्रयत्नतः ॥ 205

स्वाद्वन्नैः शिवभक्तास्ते भोजनीया यथाविधि ।
शैवं भोक्तारमुत्कृष्टं निकटस्थमनुत्तमम् ॥ 206

त्यक्त्वा यः कुरुते श्राद्धं तद्व्यर्थं नात्र संशयः ।
अष्ट दिक्ष्वष्टतीर्थानि ज्ञानवाप्यां वसन्ति च ॥ 207

तेषु स्नानं यथाशास्त्रं कर्तव्यं प्रीतिपूर्वकम् ।
अष्टदिक्ष्वपि कर्तव्यमेकैकत्र यथाक्रमम् ॥ 208

पञ्चधा श्राद्धमनघैरन्नैश्चापि यथाविधि ।
पूर्वदिग्भागमारभ्य सव्येनैव यथाक्रमम् ॥ 209

स्नानश्राद्धादि कर्तव्यमप्रमादेन सर्वथा ।
वेद गौरी ज्ञान धर्म मोक्ष पुण्य कराणि च ॥ 210

पितृकार्याणि तीर्थानि ज्ञेयान्यष्टौ शुभानि मे ।
चत्वारिंशद्यथाशास्त्रं ज्ञानवापीतटे शुभे ॥ 211

श्राद्धानि नियमेनैव कर्तव्यानि न संशयः ।
एतेषु च समाप्तेषु तदनन्तरमादरात् ॥ 212

पञ्च श्राद्धानि कार्याणि विधिवन्मुक्तिमण्टपे ।
एकैकं श्राद्धमेकैकदिने कार्यं यथाक्रमम् ॥ 213

नैकस्मिन् दिवसेऽनेकं कर्म श्राद्धं विधीयते ।
श्राद्धान्येवं विधायैव ज्ञानवापीतटे शुभे ॥ 214

मणिकर्णितटे कुर्यात्ततः श्राद्धं यथाविधि ।
वीरेशकुण्डनिकटे ततः कार्यं प्रयत्नतः ॥ 215

तत पशुपतीशस्य कुण्डप्रान्ते मनोहरे ।
कालकुण्डतटे कार्यं तदनन्तरमादरात् ॥ 216

शिवगङ्गातटे कार्यं ततः सम्यग्यथाविधि ।
कार्कोटकस्यापि कुण्डे तटप्रान्ते मनोहरे ॥ 217

ततः पिशाचतीर्थेऽपि कर्तव्यं विधिपूर्वकम् ।
ॐकारकुण्डप्रान्तेऽपि कर्तव्यं तदनन्तरम् ॥ 218

ततः पिलिप्पपिलाकुण्डे कर्तव्यं विधिपूर्वम् ।
हंसतीर्थतटे कार्यं तदनन्तरमादरात् ॥ 219

शक्रकुण्डेशकुण्डेऽपि तत्र कार्यं प्रयत्नतः ।
ततः केदारकुण्डेऽपि कर्तव्यं विधिपूर्वकम् ॥ 220

अर्ककुण्डे ततः कार्यं चन्द्रकूपे ततः परम् ।
ततः सिद्धेशकुण्डेपि दुर्गाकुण्डे ततः परम् ।। 221

कामाक्षीकुण्डनिकटे ततः कर्तव्यमादरात् ।
सार्धाष्टकोटिलिङ्गानि कुण्डान्यपि वरानने ।। 222

श्रीमदन्तर्गृहे रम्ये सन्ति दिव्यानि भूरिशः ।
अन्तर्गेहाद्बहिर्देवि लिङ्गसङ्ख्या न विद्यते ।। 223

कुण्डानामपि दिव्यानां सङ्ख्या नास्त्येव सर्वथा ।
तेषु सर्वत्र कर्तव्यं श्राद्धं यद्यपि सर्वथा ।। 224

तथापि शक्तिहीनैस्तु श्राद्धं कार्यं क्वचित्क्वचित् ।
उक्तस्थलेषु कर्तव्यमवश्यं पितृतत्परैः ।। 225

श्राद्धमन्नेन विमले यथाशास्त्रं यथाक्रमम् ।
उक्तस्थलेषु सर्वत्र पञ्चवारं यथाक्रमम् ।। 226

श्राद्धं कर्तव्यमन्नेन सर्वथैवाप्रमादतः ।
अशक्तैस्तु त्रिवारं वा श्राद्धं कर्तव्यमादरात् ।। 227

द्विवारमधमेनापि कर्तव्यं नात्र संशयः ।
श्राद्धान्येवं यथाशास्त्रं कृत्वा तदनु सादरम् ।। 228

स्वशक्त्या शैववर्याणां पूजा कार्या प्रयत्नतः ।
शैवक्षेत्रमिति ज्ञात्वा काशीं शैवजनाश्रयाम् ।। 229

शैवानुरागः कर्तव्यो धनधान्यादिभिः शुभैः ।
तुष्टो भवाम्यहं नित्यं शैवानामेव पूजया ॥ 230

तस्मान्मदर्थं शैवानां पूजा कार्या प्रयत्नतः ।
काश्यां शैवोत्तमे दत्तमेकं वा ग्रासमुत्तमम् ॥ 231

अनन्तफलदं नूनं भवत्येव न संशयः ।
दुर्लभेयं यथशास्त्रं तथा शैवोऽपि दुर्लभः ॥ 232

अनेकजन्मतपसा शैवो भ्रमति मानवः ।
यथा सदाशिवादन्यो नास्ति देवोत्तमः शिवे ॥ 233

तथा शिवद्विजादन्यो नास्ति विप्रोत्तमो भुवि ।
यथा काशीसमं क्षेत्रं नास्ति ब्रह्माण्डगोलके ॥ 234

तथा शैवसमो विप्रो नास्ति ब्रह्माण्डगोलके ।
चरलिङ्गाय शैवाय यः पूजां न करिष्यति ॥ 235

स एव यातनाभोक्ता स एवाघकुलाश्रयः ।
तस्मात्काश्यां विशेषेण शैवाः शिवपरायणाः ॥ 236

पूजनीयाः प्रयत्नेन शिवप्रीत्यर्थमादरात् ।
पुरा कश्चिद् द्विजवरो विश्रुतः शैवपुङ्गवः ॥ 237

शिवैकशरणो नित्यं लिङ्गपूजापरायणः ।
दीर्घपिङ्गजटाधरी सदा रुद्राक्षभूषणः ॥ 238

भसितोद्धूलितवपुस्त्रिपुण्ड्राङ्कितमस्तकः ।
शैवशास्त्रार्थतत्वज्ञः शिवतत्वैकचिन्तकः ॥ 239

निर्ममो निर्मलः शान्तो वीतरागो विचक्षणः ।
मलयाचलदेशेषु निवसन् स कदाचन ॥ 240

क्व स्थातव्यं मया नित्यमिति चिन्तापरोऽभवत् ।
क्व वा मुक्तिप्रदं क्षेत्रं क्व वा सर्वार्थसाधकम् ॥ 241

क्व सर्ववेदवेद्यं तद् वेद्यमाद्यन्तवर्जितम् ।
क्व वा बहूनि लिङ्गानि सन्ति दिव्यानि सर्वदा ॥ 242

क्व वा तीर्थोदकं रम्यं स्नानयोग्यमघापहम् ।
क्व वा शिवपराः शैवाः शिवलिङ्गार्चनप्रियाः ॥ 243

क्व वा शिवकथालापाः श्राव्याः पापविनाशकाः ।
क्व वा शिवशिवेत्येवं ध्वनिः सम्श्रूयते सदा ॥ 244

क्व वा बिल्ववनं रम्यं शिवप्रियकरं शुभम् ।
क्व वा रम्यं शिवस्थानं नेत्रोत्सवकरं परम् ॥ 245

क्व वा शिवेति सर्वेऽपि वदन्तः सन्ति साधकाः ।
क्व वा पाशुपताः शुद्धाः शिवैकपरदेवताः ॥ 246

क्वा वा कर्णगलभ्राजद्रुद्राक्षाभरणाः शुभाः ।
क्व वा भस्मलसत्फालाः फाललोचनपूजकाः ॥ 247

क्व वा ब्रह्मादयो देवाः पूजयन्ति सदाशिवम् ।
क्व वा गन्धर्वयक्षाद्याः पूजयन्ति महेश्वरम् ॥ 248

क्व वा वसन्ति सर्वेऽपि वामदेवादयो द्विजाः ।
क्व वा तिष्ठति शैवेन्द्रः कपिलः सिद्धसेवितः ॥ 249

क्व वा घोरं तपस्तप्तं विष्णुना सर्वसिद्धिदम् ।
क्व वा पूर्वं तपस्तप्तं सर्वैरपि मुमुक्षुभिः ॥ 250

क्व वा पञ्चाक्षरो मन्त्रो महेशेनोपदिश्यते ।
क्व वा मरणमात्रेण मुक्तिः शैवैरवाप्यते ॥ 251

क्व वा लीलां महादेवः करोति शिवया सह ।
क्व वा श्रीनन्दिकेशादिगणनाथाः शिवप्रियाः ॥ 252

क्व वा धर्मरताः शुद्धाः शिवलिङ्गार्चनप्रियाः ।
उक्तसर्वगुणोपेतमन्यत्क्षेत्रं न सर्वथा ॥ 253

उक्तसर्वगुणोपेता काशी तिष्ठति सा ध्रुवम् ।
शीर्णं शरीरमेतन्मे पादे नास्ति बलं मम ॥ 254

मया दूरस्थिता काशी प्राप्तव्या कथमुत्तमा ।
निकटोच्चारितोऽपीष्टैः शब्दो न श्रूयते तथा ॥ 255

मया दूरस्थिता काशी प्राप्तव्या कथमुत्तमा ।
भुज्यते स्वल्पमप्यन्नं तन्न जीर्यति सर्वथा ॥ 256

मया दूरस्थिता काशी प्राप्तव्या कथमुत्तमा ।
वक्तुं वाक्यानि नो यान्ति मार्गप्रश्नार्थमाशु मे ॥ 257

मया दूरस्थिता काशी प्राप्तव्या कथमुत्तमा ।
वित्तं नास्त्येव भक्षार्थं न पूर्वं धनमार्जितम् ॥ 258

मया दूरस्थिता काशी प्राप्तव्या कथमुत्तमा ।
काशीयात्रार्थमुद्योगो यौवने न कृतो मया ॥ 259

अतः परं कथं प्राप्या काशी मोक्षप्रदा शुभा ।
काशीप्रभावो न मया पूर्वं ज्ञातः कथंचन ॥ 260

इदानीं जीर्णदेहेन काशी प्राप्या कथं मया ।
यावदङ्घ्रिबलं यावच्छ्रोत्रनेत्रबलं परम् ॥ 261

यावद्बाहुबलं तावत्काशी प्राप्या नरोत्तमैः ।
यावन्नाशो न देहस्य यावन्न्यायार्जितं धनम् ॥ 262

तावदेव नरैः काशी प्राप्तव्या मुक्तिदायिनी ।
यावत्पुष्टिः शरीरस्य यावन्न व्याधिपीडनम् ॥ 263

यावदत्यन्तसन्तोषस्तावत्काशीं समाश्रयेत् ।
येन नालोकिता काशी स नरो न नरः स्मृतः ॥ 264

किन्तु विड्भक्षणप्रीतः सारमेयो न संशयः ।
अदूरस्थमपि स्पृष्टं वस्तु नैव हि दृश्यते ॥ 265

निकटोच्चारितोऽपीष्टैः शब्दो न श्रूयते तथा ।
येन नाभ्यर्चितं लिङ्गं श्रीमद्विश्वेश्वराभिधम् ॥ 266

स कुलीनोऽपि तज्जन्म व्यर्थं नास्त्यत्र संशयः ।
काको वान्योऽपि यद्वंशे काशीं प्रति न गच्छति ॥ 267

तत्कुलं पुल्कसकुलं भवत्येव न संशयः ।
अनेकधनदो नित्यं महादानप्रदोऽपि वा ॥ 268

येन नालोकिता काशी येन नाभ्यर्चितः शिवः ।
सोऽपि किं मनुजः किन्तु कृमिः कीटोऽपि वा तथा ॥

सर्वराष्ट्राधिपो राजा जितक्रोधोऽपि सर्वथा ।
न काशीदेशकीटेन सदृशः सत्यमुच्यते ॥ 270

अधीतवेदशास्त्रोऽपि काशीदर्शनवर्जितः ।
न काशीदेशकीटेन सदृशः सत्यमुच्यते ॥ 271

वरं भिक्षाटनं काश्यां नान्यत्र राष्ट्रेऽशनं वरम् ।
वरं शाकाशनं काश्यां नान्यत्र शाल्यशनं वरम् ॥ 272

जलपानं करं काश्यां सर्वाघौघविनाशनम् ।
वरं नान्यामृतस्यापि पानं सत्यं न संशयः ॥ 273

अत्र पुष्टिकरं भैक्ष्यं(भैक्षं) न वरं घृतपाचितम् ।
देहशुद्धिकरं काश्यां जीर्णपर्णाशनं वरम् ॥ 274

मां नयाखिलदेवेश काशीं विश्वेश्वरप्रभो ।
दीनाऽनाथैकशरण करुणाकर शङ्कर ।। 275

हर धीरामराधीश मामनाधारमुद्धर ।
अघोराघोरसंसारपारावारादतिद्रुतम् ।। 276

नोपेक्षा मयि कर्तव्या सर्वदा सर्वथा प्रभो ।
काशीं प्रापय मामीश शरणागतवत्सल ।। 277

कदा काशीं गमिष्यामि द्रक्ष्ये विश्वेश्वरं प्रभुम् ।
कदा धन्यो भविष्यामि कदा शम्भुः प्रसीदति ।। 278

कदा वाऽशेषपापौघविनाशकरमुत्तमम् ।
श्रीविश्वेश्वरलिङ्गस्य पास्ये निर्णेजनोदकम् ।। 279

दण्डपाणिप्रसादेन ज्ञानवाप्यां कदा मुदा ।
एकं वा मज्जनं सम्यक्करिष्याम्यघशान्तये ।। 280

कदाऽवधीरितसुधैर्ज्ञानवापीजलैरिह ।
पितृमुक्तिप्रदैः शुद्धैः करिष्ये तर्पणं मुदा ।। 281

प्रदक्षिणत्रयं वापि कृत्वा सम्यग्यथाविधि ।
कदा वा विश्वनाथस्य प्रणामं करवाण्यहम् ।। 282

कदा शिवप्रसादेन मणिमण्टपमण्डितम् ।
मुक्तिमण्टपमासाद्य वसामि क्षणमादरात् ।। 283

कदा ढुण्ढीशममलमुमापुत्रमघापहम् ।
नवदूर्वाङ्कुरैः शुद्धैः पूजयामि मनोहरैः ॥ 284

श्रीमद्विश्वेश्वरे लिङ्गे ब्रह्मविष्णवादिपूजिते ।
कदा पूजां करिष्यामि बहुबिल्वदलैः शुभैः ॥ 285

वीरेश्वराभिधं लिङ्गं कदा द्रक्ष्ये मनोहरम् ।
कदा पशुपतीशं च पश्यामि सकलार्थदम् ॥ 286

श्रीकालभैरवं देवं देवानामपि शासकम् ।
कदा पापौघशान्त्यर्थं द्रक्ष्ये यक्षादिसेवितम् ॥ 287

विघ्नान्धकारमार्ताण्डमण्डलोपममुत्तमम् ।
वक्रतुण्डेशमनघं कदा द्रक्ष्ये शिवप्रियम् ॥ 288

शिवगङ्गाजले रम्ये सन्मङ्गलकरे शुभे ।
कदा स्नानं करिष्यामि तर्पणं च यथाविधि ॥ 289

अशेषविषशान्त्यर्थं जन्मरोगौषधे परे ।
कदा कार्कोटके तीर्थे करिष्ये स्नानमादरात् ॥ 290

श्रीमदोङ्कारनाथं च कदा पश्यामि सादरम् ।
ओङ्कारतीर्थे च कदा करिष्ये स्नानमादरात् ॥ 291

कदा पिलिपिलातीर्थे स्नात्वा सन्तर्प्य पूर्वजान् ।
त्रिलोचनेशमाराध्यं कदा द्रक्ष्ये मनोहरम् ॥ 292

कदा स्नात्वा हंसतीर्थे कृत्तिवासेश्वरं प्रभुम् ।
पूजयित्वा विधानेन ध्वस्तपापो भवाम्यहम् ॥ 293

कदा केदारकुण्डेऽपि स्नात्वाभ्यर्च्य पितॄन्मुदा ।
केदारेश्वरमभ्यर्च्य तुष्टचित्तो भवाम्यहम् ॥ 294

स्नात्वा लोलार्ककुण्डेऽपि लोलार्केशं प्रणम्य च ।
कदा पुण्यप्रभावेण द्रक्ष्याम्यर्कविनायकम् ॥ 295

नत्वा सिद्धेश्वरं सम्यग्दुर्गाकुण्डे मनोहरे ।
स्नात्वा दुर्गां जगद्वन्द्यां कदा द्रक्ष्ये शिवप्रियाम् ॥ 296

सर्वसिद्धिप्रदैः सिद्धैः कामाक्षीतीर्थवारिभिः ।
स्नात्वा तत्र करिष्यामि कदा तर्पणमादरात् ॥ 297

नवबिल्वदलैः शुद्धैः कामाक्षीं कामदायिनीम् ।
कदा समर्चयिष्यामि सर्वाभीष्टप्रदायिनीम् ॥ 298

अन्नपूर्णामनन्तानामन्नदात्रीं भयापहाम् ।
कदा द्रक्ष्यामि सुभगां वरदानविचक्षणाम् ॥ 299

कदा तपः करिष्यामि ज्ञानवापीतटे शुभे ।
शिवभावं प्रपद्येऽहं शङ्करानुग्रहात्कदा ॥ 300

कदा शिव महेशान पार्वतीरमण प्रभो ।
महादेवेति विलपन् काश्यां त्यक्ष्ये तनुं मुदा ॥ 301

एवं विलप्य वृद्धोऽसौ कृत्वा शङ्करपूजनम् ।
शनैः शनैराजगाम काशीं प्रति शिवार्चकः ॥ 302

काशीमागत्य स ततो दण्डपाणिप्रसादतः ।
ज्ञानवापीजले शुद्धे चकार स्नानमादरात् ॥ 303

ततश्चकार विमलैः श्राद्धमन्नेन सादरम् ।
पिण्डदानं च पिष्टेन चकार विधिपूर्वकम् ॥ 304

तदा तत्पितरः पूर्वमघोरनरकस्थिताः ।
नरकादुत्थिताः सद्यः सार्धार्बुदमितास्तदा ॥ 305

ततो यमभटाः सर्वे यममूचुर्भयानकाः ।

**यमभटा ऊचुः** –

विनैव कारणं किञ्चिन्नरकादुत्थिता इति ॥ 306

ततो विलोक्य तान् शुद्धान् नरकादुत्थितान् पितॄन् ।
यमः प्रोवाच वचनं कृताञ्जलिपुटस्तथा ॥ 307

किं भवद्वंशजैः शैवैः पुण्यं कृतमघापहम् ।
कथमुद्धरणं जातं भवतां ब्रूत सादरम् ॥ 308

**पितर ऊचुः -**

शैवेनास्मद्वंशजेन काशीं प्रति समागतम् ।
ज्ञानवाप्यां कृतं श्राद्धं यथाशास्त्रं यथाक्रमम् ।। 309

शैवोत्तमेन शैवेन वयं पापकुलाश्रयाः ।
उद्धृता यम सर्वज्ञ यास्यामो ब्रह्मणः पदम् ।। 310

इति तद्वचनं श्रुत्वा यमः सन्तुष्टमानसः ।
पूजां चकार सर्वज्ञो यथाक्रममतन्द्रितः ।। 311

ततो रत्नविमानानि दत्वा तेभ्यो यमः स्वयम् ।
देवेन्द्रलोकपर्यन्तं तैः सहैव जगाम सः ।। 312

तदा कोलाहलो भूयानभूदत्यद्भुतस्वनः ।
पुष्पवृष्टिरभूद्दिव्या दिव्यगन्धसमन्विता ।। 313

ततस्तानमलान् दृष्ट्वा देवेन्द्रः प्रीतमानसः ।
रत्नासनेषूपविश्य चक्रे पूजां यथाक्रमम् ।। 314

ततस्ते पूजितास्तेन देवेन्द्रेणापि सादरम् ।
ब्रह्मलोकं ययुः प्रीता देवेन्द्रेणापि संयुताः ।। 315

पितॄन् दृष्ट्वा विमानस्थान् ब्रह्मा प्रत्युज्जगाम तान् ।
ततोऽतिश्रद्धया युक्तो ननाम विधिवत्क्रमात् ।। 316

रत्नासनेषूपविश्य पूजाद्रव्येण सादरम् ।
चकार विधिवत्पूजां विधिज्ञो विधिवत्क्रमात् ॥ 317

ततो ब्रह्मसभासद्भिरतिविस्मयपूर्वकम् ।
एते क इति संपृष्टो जगाद वचनं मुदा ॥ 318

अतिघोरतपोलभ्यो ब्रह्मलोक इति प्रथा ।
पूर्वमासीन्न चेदानीं किं वक्तव्यमतः परम् ॥ 319

वनपर्णकुटीवायं ब्रह्मलोको मदाश्रयः ।
सुलभोऽभून्मनुष्याणामपि पातकिनामपि ॥ 320

एतत्पातकसङ्घानामियत्ता नास्ति सर्वथा ।
तादृशान्यपि घोराणि कृतानि बहुलानि हि ॥ 321

सिकतावर्षधाराणां तारकाणां कदाचन ।
शक्यते गणनां कर्तुमेतेषां पातकस्य ॥ 322

आब्रह्मकल्पपर्यन्तं नरके यदि सङ्कुले ।
तथापि नैतत्पापानां नाशो नवति सर्वथा ॥ 323

ईदृशानां तु नरके क्षणमात्रमपि स्थितिः ।
अदिदुःखकरा घोरा न ज्ञातैव कदाचन ॥ 324

एतेषां भूरिभाग्येन कश्चिच्छैवोऽभवत्कुले ।
तेन विध्युक्तमार्गेण काशीयात्रा कृता शुभा ॥ 325

ज्ञानवाप्यां पिशेषेण पितॄनुद्दिश्य शाङ्करः ।
चकार विधिवच्छ्राद्धं पिण्डदानं च सादरम् ॥ 326

तिरस्कृतामृतैर्दिव्यैर्ज्ञानवापीजलैः शुभैः ।
चकार तर्पणं शैवः शुद्धकृष्णतिलान्वितैः ॥ 327

तेनैव पुण्यलेशेन तस्यैते पितरस्ततः ।
अघोरनरकं हित्वा मल्लोकं समुपागताः ॥ 328

काश्यां शैवकृतं श्राद्धं ज्ञानवाप्यां विशेषतः ।
पितृमुक्तिप्रदं नूनं सत्यमेवोच्यते मया ॥ 329

काश्यां तत्कुलजातेन कृतं श्राद्धमघापहम् ॥
पितॄणां मुक्तिदं श्रेष्ठं महापातकिनामपि ॥ 330

देवगन्धर्वमनुजयक्षाणामपि सर्वथा ।
काश्येव मुक्तिदा नान्यन्मुक्तिदं जगतीतले ॥ 331

काश्यां मृदा वा यः कुर्यात् पिण्डदानं पितॄन् प्रति ।
सोऽपि धन्यः पितॄन् स्वीयानुद्धरिष्यत्यसंशयम् ॥ 332

काश्यां पादे वाऽधस्ताज्जलं दास्यति मानवः ।
पित्रर्थं तेन स पितॄनुद्धरिष्यत्यसंशयम् ॥ 333

काश्यां पिण्डप्रदानेन पितॄणामृणबन्धनात् ।
मुक्तो भवति पुण्यात्मा स तद्भूषणभाग्भवेत् ॥ 334

यः काश्यामतियत्नेन स्वपितृभ्यो यथाविधि ।
श्रद्धया भजति प्रीत्या स्वपितृभ्यश्च सर्वदा ।। 335

पुत्रः पितृविमुक्त्यर्थं काश्यां श्राद्धं करिष्यति ।
यथाविधि प्रयत्नेन स पुत्रः पुत्र उच्यते ।। 336

पुत्रः श्राद्धं विधानेन यः काश्यां न करिष्यति ।
स पुत्रो न भवत्येव पुत्रलक्षणवर्जितः ।। 337

अस्मद्गोत्रसमुद्भूतः काश्यां यः कश्चनादरात् ।
न करिष्यति किं श्राद्धं स्वाद्वन्नैर्भक्तिपूर्वकम् ।। 338

काश्यां मत्कुलजो मर्त्यः पितॄणां मुक्तिकारणम् ।
सतिलं विमलं भक्त्या जलं किं वा न दास्यति ।। 339

काश्यां भोजनकाले वा स्वपितृभ्यः स्वधास्त्विति ।
मुष्टिमात्रमपि प्रीत्या किमन्नं नैव दास्यति ।। 340

काश्यां क्रीडारतो वापि मद्वंश्यः कश्चिदुत्तमः ।
मृद्गोलकं वा सजलं किञ्चिद्दास्यति सादरम् ।। 341

अस्माभिर्दुरदृष्टेन नरके स्थीयते सदा ।
काश्यां पिण्डप्रदानेन को वाऽस्मानुद्धरिष्यति ।। 342

अघोरयातनामेत्य स्थीयतेऽस्माभिरन्वहम् ।
कश्चित्काश्यां जलं दत्वा किमस्मान्नोद्धरिष्यति ।। 343

इति घोरतरे क्रूरे नरके पतिताः सदा ।
वदन्ति पितरः सर्वे विलुठन्तो रुदन्ति च ॥ 344

एतद्वंशेऽपि सुभगः शैवः शिववरार्चकः ।
काश्यां विरक्तिमार्गेण पूर्वन्यायार्जितैर्धनैः 345

स चक्रे विधिवच्छ्राद्धं ज्ञानवापीतटे शुभे ।
तेनैव घोरनरकादेते सर्वे समुद्धृताः ॥ 346

पुनरावृत्तिरहितं स्थास्यन्त्यत्रैव सर्वदा ।
तृप्ता भवन्ति पितरः काशीसलिलतर्पणात् ॥ 347

विना तेन न हि प्रीतिः सुधापानेऽपि सर्वथा ।
एते पूज्यतमा नित्यं भवतामपि सादरम् ॥ 348

मया तु नित्यमेतेषां पूजा कार्या यथाक्रमम् ।
इत्युक्त्वा सोऽपि तद्वाक्यं पितॄणां तु यथाक्रमम् ॥ 349

पूजां चक्रुर्यथाशास्त्रं ततस्तत्रैव ते स्थिताः ।
अतो नियमतः कार्या काशीयात्रा वरानने ॥ 350

काशीतपःप्रभावेण इतो लक्ष्या नरोत्तमैः ।
शृणु वक्ष्ये विधिं सम्यक्पञ्चक्रोशप्रदक्षिणाम् ॥ 351

मत्प्रदक्षिणमात्रेण नश्यत्यघकुलं क्षणात् ।
उपवासः प्रयत्नेन कार्यो मुण्डनपूर्वकम् ॥ 352

पञ्चद्रव्यं ततो ग्राह्यं स्नात्वा ज्ञानेशसन्निधौ ।
ततोऽन्तर्गृहयात्रापि कर्तव्या विधिपूर्वकम् ॥ 353

मुक्तिमण्टपमासाद्य ततः सङ्कल्पमाचरेत् ।
करिष्ये विश्वनाथाहं पञ्चक्रोशप्रदक्षिणम् ॥ 354

आज्ञां देहि कृपासिन्धो सर्वपापापनुत्तये ।
निष्ठीवनं कृतं काश्यां दत्तश्च चरणो मया ॥ 355

लिङ्गेष्वेव सदा शम्भो तत्पापं शान्तिमेष्यतु ।
काश्यां जलचराः केचित्पादघातेन संहताः ॥ 356

भिन्नरूपाः महादेव तत्पापं शान्तिमेष्यतु ।
काश्यां जलचराः कीटाः पादघातेन संहताः ॥ 357

भिन्नरूपा महादेव तत्पापं शान्तिमेष्यतु ।
काश्यामन्नार्थिनामन्नं शक्तेनापि मया शिव ॥ 358

न दत्तं लोभमासाद्य तत्पापं शान्तिमेष्यतु ।
अशक्तेनैकदा सम्यगन्तर्गेहप्रदक्षिणम् ॥ 359

मया न कृतमीशान तत्पापं शान्तिमेष्यतु ।
कदाचिदनृता वाणी व्याहृता स्वमुखाच्छिव ॥ 360

सर्वपुण्यहरा शम्भो तत्पापं शान्तिमेष्यतु ।
कदाचिन्न कृतं दैवाच्छैववर्यस्य वन्दनम् ॥ 361

कदाचिदुदकं पीतमकृत्वा भस्मधारणम् ।
प्रमादेन महादेव तत्पापं शान्तिमेष्यतु ।। 362

कदाचिच्छिवलिङ्गस्य निर्णेजनजलं शुभम् ।
न पीतं पार्वतीनाथ तत्पापं शान्तिमेष्यतु ।। 363

कदाचिद्बिल्वपत्रेण भ्रमादेव हि सर्वथा ।
लिङ्गं नाभ्यर्चितं शम्भो तत्पापं शान्तिमेष्यतु ।। 364

ज्ञानवापीजले रम्ये भ्रमेणैव कदाचन ।
न स्नानं कृतमीशान तत्पापं शान्तिमेष्यतु ।। 365

कदचिन्न कृतं शम्भो दण्डपाण्यर्चनं मया ।
नार्चितो ढुण्ढिपालोऽपि तत्पापं शान्तिमेष्यतु ।। 366

वीरेश्वरो भ्रमेणैव कदाचिन्नार्चितो मया ।
सर्वार्थितः कृपासिन्धो तत्पापं शान्तिमेष्यतु ।। 367

श्रीमत्पशुपतीशोऽपि पशुपाशविमोचकः ।
कदाचिन्नार्चितः शम्भो तत्पापं शान्तिमेष्यतु ।। 368

श्रीकालभैरवः शास्ता भ्रमैणैव कदाचन ।
नाराधितो महादेवस्तत्पापं शान्तिमेष्यतु ।। 369

प्रचण्डविघ्नसंहर्ता वक्रतुण्डेश्वरो मया ।
कदाचिन्नार्चितः शम्भो तत्पापं शान्तिमेष्यतु ।। 370

शिवगङ्गाजलस्नानं कदाचिन्न कृतं मया ।
अलसेन विरूपाक्ष तत्पापं शान्तिमेष्यतु ।। 371

ओङ्काराख्यं महालिङ्गं भ्रान्तेनैव कदाचन ।
मया नाभ्यर्चितं शम्भो तत्पापं शान्तिमेष्यतु ।। 372

केदारेश्वरमाराध्यमनाराध्यैव संस्थितम् ।
मयाकदाचिद्विश्वेश तत्पापं शान्तिमेष्यतु ।। 373

एवमुच्चार्य सकलानपराधान्यथाक्रमम् ।
ततः स्नात्वा ज्ञानवाप्यां पुनः सम्पूज्य मां ततः ।। 374

वीरेश्वरादिस्थानेषु गत्वा सम्पूज्य सादरम् ।
पुनरभ्यर्चनं कार्यं मयि भक्तिपुरः सरम् ।। 375

ततो मौनेन नियमात्कृताञ्जलिपुटैर्नरैः ।
दण्डपाणिं प्रणम्यैव गन्तव्यं मुक्तिमण्टपात् ।। 376

दिनाष्टकेन विधिवत्पञ्चक्रोशप्रदक्षिणम् ।
कर्तव्यमतियत्नेन भक्तिश्रद्धासमन्वितैः ।। 377

मध्ये सर्वेषु तर्थेषु स्नात्वा सम्यग्यथा विधि ।
श्राद्धं कार्यं प्रयत्नेन स्वाद्वन्नैरतिशोभनैः ।। 378

पूजनीयाः प्रयत्नेन पञ्चक्रोशस्य रक्षकाः ।
यात्राविघ्नहराः सर्वे वन्दनीयाः प्रयत्नतः ।। 379

सहस्रकोटिलिङ्गानि दिव्यान्यत्यद्भुतानि च ।
पञ्चक्रोशमहामार्गे तिष्ठन्ति कमलानने ॥ 380

बिल्वपत्राक्षताद्यैस्तु तानि यत्नेन सर्वथा ।
पूजनीयानि लिङ्गानि यथालिङ्गं यथा क्रमम् ॥ 381

भैरवाणां गणेशानां दुर्गाणां च वरानने ।
सङ्ख्या न वर्तते तेषां दर्शनं चातिदुर्लभम् ॥ 382

निराहारेण कुर्वन्ति देवगन्धर्वदानवाः ।
केचिन्मुनीश्वरा दिव्याः पञ्चक्रोशप्रदक्षिणम् ॥ 383

पञ्चक्रोशस्य यात्रायां तिलमात्रमपि प्रिये ।
नातिक्रमेद्यथामार्गं गन्तव्यमपि यत्नतः ॥ 384

करसञ्चलनं त्यक्त्वा कृताञ्जलिपुटैः सदा ।
मौने नैव हि कर्तव्यं पञ्चक्रोश प्रदक्षिणम् ॥ 385

मामेव सर्वदा ध्यात्वा शिवमद्वयमव्ययम् ।
मत्कथाश्रवणासक्तैस्तत्कर्तव्यं प्रयत्नतः ॥ 386

रात्रौ जगरणं कार्यमादिनाष्टकमादरात् ।
भोजनीयाः प्रयत्नेन शैवा ब्राह्मणपुङ्गवाः ॥ 387

ततो ममान्तिकं प्राप्य मामभ्यर्च्य सदाशिवम् ।
यात्रां निवेद्य शुभदां ततः स्वगृहमाविशेत् ॥ 388

प्रति पक्षेऽपिकर्तव्यं पञ्चक्रोशप्रदक्षिणम् ।
एवं तु स्थूलमार्गेण पञ्चक्रोश प्रदक्षिणम् ।।
यथाकथञ्चित्कर्तव्यं मनुजैरल्प साधनैः ।। 389

यथाशास्त्रं तु तत्कर्तुं देवैरपि न शक्यते ।
यथाशास्त्रं कृतं चेत्स्यान्मोक्षः स्यादेव तत्क्षणात् ।। 390

ब्रह्मविष्ण्वादयो देवाः पञ्चक्रोश प्रदक्षिणम् ।
एकवारं यथाशास्त्रं कर्तव्यमिति निर्ययुः ।। 391

साङ्गं प्रत्येकमेकैकं लिङ्गं सम्पूज्य सादरम् ।
भैरवान् गणपान्सम्यक्पूजयाम इति प्रियात् ।। 392

पञ्चक्रोशस्य यात्रार्थं सङ्कल्प्य विधिवत्ततः ।
निर्ययुश्चामराः सर्वे ब्रह्मविष्णु पुरोगमाः ।। 393

प्रत्येकं दिव्यलिङ्गानां कुर्वन्तः पूजनं मुदा ।
रविरक्ताक्षगन्धर्वाः प्रापुर्विंशतिवत्सरैः ।। 394

ततो विश्रान्तचित्तास्ते प्रत्येकं विस्मयं गताः ।
यात्रेयं विधिवत्कर्तुं न शक्यत इति प्रिये ।। 395

स्थितानि पश्चाल्लिङ्गानि स्वल्पान्येव पुरः सरम् ।
बहूनि सन्ति लिङ्गानि दिव्यान्यत्यद्भुतानि च ।। 396

गणेश भैरवादीनां गणनैव न सर्वथा ।
प्रत्येकं पूजनात्कालो भूयानेव गमिष्यति ।। 397

क्व तावदायुरस्माकं क्वतावत्पादयोर्बलम् ।
यावद्देशं यथाशास्त्रं पूजनं मोक्षसाधकम् ।। 398

यथाशास्त्रं कृतं चेत्स्यात्पञ्चक्रोश प्रदक्षिणम् ।
मोक्षोभवति शीघ्रेण तत्तु कर्तुं न शक्यते ।। 399

सङ्कल्पस्तु कृतः पूर्वं किङ्कर्तव्यमतः परम् ।
सङ्कल्पप्रच्युतिर्नाम पातकं च समागतम् ।। 400

घोरं पञ्चाग्नि मध्येऽपि तपः कर्तुं हि शक्यते ।
पञ्चक्रोशस्य यात्रेयं कर्तुमेव न शक्यते ।। 401

इत्युक्त्वा दुःखिताः सर्वे पञ्चक्रोश प्रदक्षिणम् ।
स्थूलमार्गेण सर्वे ते कृत्वा काशीमुपागताः ।। 402

एकवारं कृतं पूर्वं पञ्चक्रोश प्रदक्षिणम् ।
शक्तेन नन्दिकेशेन यथा शास्त्रं यथाक्रमम् ।। 403

गणेशेनापि यत्नेन यथाशास्त्रं यथाक्रमम् ।
कृतं तद्भैरवेणापि पञ्चक्रोश प्रदक्षिणम् ।। 404

काशीनिवासिनां धर्माविहिताः सन्ति भूरिशः ।
तान् कृत्वा विधिवत्काश्यां वासः कार्यो नरोत्तमैः ।। 405

उक्ताचार रतैःकाश्यां स्थातव्यं धर्मतत्परैः ।
अन्यैर्नस्थेयममले सत्यं सत्यं न संशयः ।। 406

बहुयत्नेन साकाशी प्राप्तव्या मोक्षदा परा ।
विना काशीनिवासेन मोक्षस्तु न भविष्यति ॥ 407

काश्यामप्यति यत्नेन स्थातव्यं धर्मतत्परैः ।
अधर्मलेशरहितैः सर्वदा शिवपूजकैः ॥ 408

काशीतिस्मरणादेव महापातक कोटयः ।
क्षणाच्छिवे विनश्यन्ति सा काशी क्वोपमीयते ॥ 409

यस्याः स्मरणमात्रेण पुनर्जन्म न विद्यते ।
दुष्टस्यापि महादेवि सा काशी क्वोपमीयते ॥ 410

यस्याः स्मरणमिच्छन्ति ब्रह्मविष्ण्वादयः सुराः ।
शिवाकारासुराराध्या साकाशी .... .... ॥ 411

काकादयोऽपि काशीस्था गणयन्त्येव नामरान् ।
तादृशी दिव्यरूपाहि साकाशी .... .... ॥ 412

यस्यां काश्यां मृतानां तु मरणं मङ्गलायते ।
दिव्याशनायते पर्णं सा काशी क्वोपमीयते ॥ 413

यस्यां काश्यां जलं पीत्वा सोमपान् प्रतिवासरम् ।
तिरस्करोति काकोऽपि सा काशी .... .... ॥ 414

यस्यां क्षौमायते चीरं बिभूतिश्चन्दनायते ।
दिव्यामृतायते नीरं साकाशी क्वोपमोयते ॥ 415

यस्यां रुद्राक्षमालापि रत्नमालायते सदा ।
सुखशय्यायते घासः साकाशी .... ॥ 416

यस्यां तृणासनं शुभ्रं रत्नसिह्मासनायते ।
चक्रेश्वरायते दीनः सा काशी .... ॥ 417

यस्यां धन विहीनोऽपि दरिद्रोमनुजाधमः ।
तिरस्करोति धनदं सा काशी .... ॥ 418

यावन्तो मुक्तिमिच्छन्ति देवर्षिमुनिमानवाः ।
तावतामपि सर्वेषां गतिः काश्येव सर्वथा ॥ 419

काशी कल्पतरुर्नित्यं मुक्तिपुष्पफलान्वितः ।
मुमुक्षवोऽनिशं तत्र वसन्ति समुपाश्रिताः ॥ 420

काश्यामेव मुनिश्रेष्ठैः स्थातव्यं धर्मतत्परैः ।
विना काशीं न चान्यत्र मोक्षो भवति सर्वथा ॥ 421

अनन्तकालममलेऽनन्तजिह्वाभिरेव वा ।
काशी प्रभावो न मया शक्यते वक्तुमम्बिके ॥ 422

वैदैरपि न विज्ञातं काशीतत्वं वरानने ।
किं पुनर्विधिविष्ण्वाद्यैः शुद्धैर्मुनिवरैरपि ॥ 423

काशीस्तुतिपरा जिह्वा धन्या धन्या वरानने ।
काशीध्यानं परं धन्यं धन्यं धन्यं मनः सदा ॥ 424

इदं पुण्य समृद्ध्यर्थं कथा पापौघ नाशिनी ।
श्रोतव्या नियतैः काश्यामतियत्नेन मानवैः ।। 425

यस्त्वेतान्नित्यमध्यायान्पठिष्यति शिवालये ।
स महापातकेभ्योऽपि मुच्यते नात्र संशयः ।। 426

यः काश्यां कृतपापोऽपि मानुष्यो नित्यमादरात् ।
एतान्पठित्वाह्यध्यायान्सपापेभ्यो विमुच्यते ।। 427

काश्यां तु कृतपापानि प्रत्यहं मुदितानने ।
प्रत्यहाध्यायपाठेन विनश्यन्ति न संशयः ।। 428

सहस्रवारमध्यायाः पठिता मुनि सत्तमैः ।
काश्यां पुराकृतं पापंनाशयन्त्यग्नि सन्निभाः ।। 429

सहस्रवारमध्यायान्पठित्वैव तिलादिभिः ।
तन्मन्त्रैर्लक्षहोमोऽपि कार्यस्तत्पापनाशकः ।। 430

काशीमाहात्म्यममलमिदं प्रत्यहमादरात् ।
यः पठेद्यातना तस्य न भविष्यति भैरवि ।। 431

इदं माहात्म्यममलं कालभैरव सन्निधौ ।
प्रत्यष्टम्यां प्रयत्नेन पठनीयं विशेषतः ।। 432

एतच्छ्लोक महामन्त्रं लक्षावृत्त्या तिलादिभिः ।
शिवनिन्दाघशान्त्यर्थं होमः कार्यः प्रयत्नतः ।। 433

बिल्वाश्वत्थपलाशादि समिदाज्यान्वितास्तिलाः ।
तद्धोम साधनीभूता शुद्धाः कीटाद्यदूषिताः ॥ 434

स्वस्वशाखोक्तमार्गेण प्रतिष्ठाप्य हुताशनम् ।
तस्मिन्नग्नौ यथा शास्त्रं होमः कार्यो द्विजोत्तमैः ॥ 435

काशीमाहात्म्य मन्त्रस्य महादेवः स्वयमृषिः ।
काश्येव देवता शक्तिर्भैरवी यातनापहा ॥ 436

कीलकं सर्वयत्नेन काशीप्राप्तिरिहेप्सिता ।
छन्दोऽनुष्टुप्फलं दिव्यं मोक्षरूपमुदाहृतम् ॥ 437

सहस्रवदनां दिव्यां सहस्राक्षि करान्विताम् ।
विराड्रूपधरां नित्यां ध्यायेत्काश्यधिदेवताम् ॥ 438

श्लोकमुच्चार्य तदनु काश्यैस्वाहेति चाहुतिः ।
देवा भवन्ति यज्ञेन याज्ञिकैर्होमकर्मणि ॥ 439

दश षट् द्वादशावृत्या तच्छ्लोकानां यथाक्रमम् ।
भोजनीयाः द्विजाःश्रेष्ठा देयास्याद्दक्षिणा यथा ॥ 440

काशीमाहात्म्यममलं लिखित्वा पुस्तके शुभे ।
देयं शैवाय लिङ्गं च ससाधनमनुत्तमम् ॥ 441

**श्रीपार्वत्युवाच -**

एवं केन कृतोहोमः केन किं पातकंकृतम् ।
तत्सर्वं वद सर्वज्ञ शिवलिङ्गार्चन प्रिय ।। 442

**शिव उवाच -**

वसिष्ठेन पुरा काश्यामन्तर्गेहे शिवात्मके ।
शिवलिङ्गार्चको दृष्टः शैवः शिवपरायणः ।। 443

वसिष्ठः शिवतत्वज्ञस्तदा शैवं शिवार्चकम् ।
विलोक्य निजगादैवं ज्ञातुं तस्य मनस्तदा ।। 444

**वसिष्ठ उवाच -**

किमर्थं पूज्यते लिङ्गमेतत्किं ते प्रयच्छति ।
अदृष्टेन विना लोके वस्तुप्राप्तिर्न सर्वथा ।। 445

किमर्थमतियत्नेन क्रियते भस्मधारणम् ।
चन्दनं शीतलं रम्यमङ्गे सम्यग्विलेपनम् ।। 446

किमर्थं स्थीयते काश्यां निराहारेण सर्वदा ।
भुङ्क्ष्व नानाविधान्नानि रसवन्ति यथेप्सितम् ।। 447

किमाराध्यो हरो नित्यं श्मशाननिलयस्तव ।
शूली कपालमालाङ्गः सर्वदा वृषवाहनः ।। 448

न दृष्टोऽस्ति मया विप्र लोके पाषाणपूजकः ।
अभाग्योऽसि भवान्नूनं कृतं चाघमहर्निशम् ॥ 449

इति श्रुत्वा वसिष्ठस्य वाक्यं दुःखकरं द्विजः ।
रुरोद दुःखसङ्क्रान्तो हा हा शिवशिवेति सः ॥ 450

तदा तद्रोदनं श्रुत्वा ब्रह्मा शिवपरायणः ।
तमुवाच कृपाविष्टः किमासीदिति सादरम् ॥ 451

**द्विज उवाच -**

शिवनिन्दा कृताऽनेन श्रुता सा पुण्यनाशिनी ।
अशैवो दुरदृष्टेन दृष्टोऽयं पातकाश्रयः ॥ 452

इति तद्वचनं श्रुत्वा दुःखितो विधिरुत्तमम् ।
पुरःस्थितं वसिष्ठं तं दृष्ट्वा वचनमब्रवीत् ॥ 453

**ब्रह्मोवाच -**

हा वसिष्ठ त्वयामूढ शिवनिन्दा कथं कृता ।
दुःखितोऽयं महाशैवः शङ्करस्यैव निन्दया ॥ 454

भूलोके स्वर्गलोके वा पाताले वा कदाचन ।
एतावत्कालपर्यन्तं न दृष्टः शिवनिन्दकः ॥ 455

अघोरपातकौघस्य परिपाकस्तवाधुना ।
जातस्त्वयो यतोनिन्दा शङ्करस्य कृताध्रुवम् ।।

यस्यां पुत्रो महादेवं दूषयिष्यति दुर्भगः ।।

दुर्भगा तस्य जननी जन्म तस्य वृथा ध्रुवम् ।
शैवदुःखप्रदोमर्त्यो तथा शङ्कर निन्दकः ।

अनेकजन्मपर्यन्तं पुरीषे जायते कृमिः ।
विष्ठायां कृमिरूपेण बहुदुःखो न सर्वदा ।।

भविष्यति महादुःखं तव शङ्कर निन्दक ।
इति ब्रह्मवचः श्रुत्वा वसिष्ठो भयविह्वलः ।।

प्रणिपत्य वचः प्राह चतुर्वक्त्रं शिवार्चकम् ।

**वसिष्ठः -**

एतस्य हृदयं ज्ञातुं मयैवोक्तं चतुर्मुख ।।

शिवस्य देवदेवस्य निन्दा कार्या कथं मया ।

**ब्रह्मा -**

भ्रमेण परिहासेन शाठ्येनान्येन वा द्विज ।।

शिवनिन्दा कृता येन प्राप्तव्या यातनाऽमुना ।
भ्रमेणापि करस्पृष्टो वह्निर्दुःखकरो यथा ।। 463

तथैव दुःखदं मन्ये कृतं शङ्करदूषणम् ।
कृतस्पर्शं दहत्यग्निः शिवदूषकपातकम् ।। 464

शिवदूषक पापिष्ठः कुलं दहति सर्वथा ।
ब्रह्महत्यार्जितं पापं न नश्यत्येव सर्वथा ।। 465

शिवनिन्दकजिह्वाग्रं यमस्तप्तासि धारया ।
सदा दहति तीव्रेण क्षुभितः क्रोधसङ्कुलः ।। 466

धिक्त्वांमूर्खातिदुर्वृत्त हा महापातकाश्रय ।
धिक्च्छीलं तव दुःशील शिवदूषक दुर्भग ।। 467

त्वत्तो न पातकी लोके न त्वत्तो नारकी ध्रुवम् ।
असम्भाष्योऽनिरीक्ष्योऽसि यतस्त्वं शिवनिन्दकः ।। 468

अस्माभिरपि पापानि कृतान्येव न संशयः ।
महेशनिन्दकेनाद्य मन्मया भाषणं कृतम् ।। 469

इति तद्वचनं श्रुत्वा वसिष्ठो दुःखितः सदा ।
रुरोदोच्चैस्तदा वाचमुवाच च कृताञ्जलिः ।। 470

**वसिष्ठ उवाच -**

प्रायश्चित्तं वद श्रीमन्महापातकनाशकम् ।
प्रायश्चित्तं यदस्त्यत्र तत्करिष्यामि सर्वथा ॥ 471

**ब्रह्मोवाच -**

उपवासेन विधिवदादौ मुण्डन पूर्वकम् ।
पञ्चगव्यं च विधिवद्ग्राह्यं शङ्करदूषकैः ॥ 472

ततोऽन्तर्गृहयात्राणां कार्यं सार्धशतत्रयम् ।
ततः पञ्चक्रोशयात्राशतकं कार्यमादरात् ॥ 473

ततः शिवरहस्यस्थकाशीमाहात्म्यमुत्तमम् ।
सहस्रवारं यत्नेन पठितव्यं समाहितैः ॥ 474

ततस्तच्छ्लोकमन्त्रेण तिलहोमो यथाक्रमम् ।
कर्तव्यो लक्षपर्यन्तं तिलाज्यादिभिरुत्तमैः ॥ 475

तं दृष्ट्वा विंशदावृत्त्या शैवाः शिवपरायणाः ।
भोजनीयाः प्रयत्नेन दद्याच्च स्वर्णदक्षिणाः ॥ 476

एतावदति यत्नेन क्रियते श्रद्धया यदि ।
तदा तत्पापशान्तिस्ते भविष्यति न संशयः ॥ 477

इदं पुरा महादेवः पृष्टःसन् जगदम्बया ।
प्रायश्चित्तं जगादैवं शिवनिन्दाघनाशकम् ॥ 478

शिवनिन्दा श्रुता येन कारिता च भविष्यति ।
तेनापि यत्नतः कार्यं प्रायश्चित्तमिदंक्रमात् ॥ 479

शिवलिङ्गस्थालभङ्गः कृतो येन भ्रमाद्भवेत् ।
तदा दशगुणं कार्यं प्रायश्चित्तमिदं क्रमात् ॥ 480

भ्रमेण चरणाघात शिवलिङ्गे कृतो यदि ।
तदा दशगुणं कार्यं प्रायश्चित्तमिदं क्रमात् ॥ 481

एवमुक्तस्तदा देवि वसिष्ठो ब्रह्मणा ततः ।
तदुक्त तत्प्रकारेण प्रायश्चित्तं चकार सः ॥ 482

**सूत उवाच** -

काशीमाहात्म्य पीयूषवर्षधारा परिप्लुताम् ।
संश्लिष्य गौरीं विश्वेशः प्रापानन्दं जगत्पिता ॥ 483

ततो वृषेशमारुह्य काशीदर्शनलोलुपः ।
कैलासादगमत्काशीमुमया सह सर्वगः ॥ 484

भवद्भिरपि विप्रेन्द्राः काशी विश्वेशसंश्रया ।
सम्यगाश्रयणीयैव मोक्षार्थिभिरहर्निशम् ॥ 485

इदं माहात्म्यममलम् यः शृणोति पठिष्यति ।
स सर्वपापनिर्मुक्तः शिवलोकं गमिष्यति ।। 486

इदं माहात्म्यममलं लिखित्वा पुस्तके यदि ।
यः पूजयेदतिप्रीत्या तस्याघं संप्रणश्यति ।। 487

इदमेव हि माहात्म्यं यत्र कुत्रापि यः पठेत् ।
तत्रैव काशीविश्वेशो निवसेन्नात्र संशयः ।। 488

इदं माहात्म्यमनिशमिन्दाद्यैरमरैर्मुदा ।
श्रूयते सुखदं प्रीत्या सर्वपापौघनाशकम् ।। 489

इदमेवहि माहात्म्यं ब्रह्मा शिवपरायणः ।
ब्रह्मलोके सदा सम्यक् पठति प्रीतमानसः ।। 490

विष्णुरप्यनिशं भक्त्या शिवलिङ्गार्चनप्रियः ।
पठति प्रीतहृदयो माहात्म्यमिदमादरात् ।। 491

येनेदं पठ्यते प्रीत्या माहात्म्यमति शोभनम् ।
तेन प्राप्ता मुक्ति कान्ता सत्यं सत्यं न संशयः ।। 492

देशान्तरेऽपि वा स्थित्वा माहात्म्यमिदमुत्तमम् ।
यः पठिष्यति पुण्यात्मा स काश्यां संस्थितोभवेत् ।। 493

अशक्तैः पङ्गुभिर्वृद्धैरिदं माहात्म्यमन्वहम् ।
काश्यन्यदेशे स्थित्वाऽपि पठनीयं प्रयत्नतः ।। 494

ये जन्मदुःखादि विनाशकं सदा

श्रृण्वन्ति माहात्म्यमिदं मनोहरम् ।

ते शङ्करस्यातिहिताः शिवार्चकाः

शिवैकदेवाः शिवसम्मताः सदा ॥ 495

संसार दावानलदह्यमानैः

काशीसुधाब्ति सुरबृन्दसेव्यः ।

सेन्यो हि सर्वैरपि सर्वदायं

पापापनुत्यै जनदुःखशान्त्यै ॥ 496

॥ इति श्रीशिवरहस्ये सप्तमांशे शतसहस्रसंहितायां

काशीमाहात्म्ये द्वादशोऽध्यायः ॥



## AN APPEAL

Manuscripts on Palm Leaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. you can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M S. S M Library, Thanjavur.

The manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift

The great Scholar-King of Tanjore, Rajah Serfoji, has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this World-famous 'Sarasvati Mahal Library'. It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

DIRECTOR,
Sarasvati Mahal Library, Thanjavur.

